कलिङ्गाश्च कदम्बाश्च काम्बोजाश्च तथाधमाः ।
आस्तिको गुरुभक्तश्च जिज्ञासुः श्रद्धया सह ।।१२।।

कामक्रोधादिदुःखोत्थवैराग्यो वनितादिषु ।
चिरन्तदाराधनकृद्देहेन द्रविणेन च ।।१३।।

तस्यपादारविन्दोत्थरजःकणविभूषितः ।
स्नानमप्राप्य न प्राप्यं प्रायो वृद्धिमतेङ्गितम् ।।१४।।

नित्यशः कायवाकचित्तैस्त्रिद्व्यकाब्दाधिकावधि ।
परिचर्यारतः शिष्यः स्यात् स्वयं यतमानसः ।।१५।।

तन्तथाविधमालक्ष्य सदाऽवितथवादिनम् ।
मातृतः पितृतः शुद्धिं बुद्धिमन्तमलोलुपम् ।।१६।।

अस्तेयवृत्तिमास्तिक्ययुक्तं युक्तकृतोद्यमम् ।
अकल्मषं मृषाहीनमहीनद्रव्यमानसम् ।।१७।।

ब्रह्मचर्यव्रतं नित्यं परिचर्यापरं गुरोः ।
अधीतवेदं स्वाधीनमनाधि व्याधिवर्जितम् ।।१८।।

सुप्रसन्नमसन्नाङ्गं सदा संनिहितं गुरोः ।
परोपकारनिरतं विरतं परदूषणे ।।१९।।

मातृवद् गुरुपत्नीं च भ्रातृवत् तत्सुतानपि ।
स्मरन्तमस्मराबाधं स्मितोपेतमविस्मितम् ।।२०।।

परिग्रहेत् परीक्ष्यैव शिष्यमेवंविधं गुरुः ।
अनीदृशं गुरुः शिष्यं न गृह्णीयात्कदाचन ।।२१।।

यदि गृह्णाति तद्दोषः प्रायो गुरुमपि स्पृशेत् ।
प्रजादोषो यथा राज्ञि पत्यौ जायाकृतो यथा ।।२२।।

तथाशिष्यकृतो दोषो गुरुमेति न संशयः ।
स्नेहाद्वा यदि वा लोभाद् योऽनुगृह्णात्यदीक्षया ।।२३।।

तस्मिन् गुरौ सशिष्येतु देवताशाप आपतेत् ।
मधुद्विषि महादेवे मातापित्रोर्महीभृति ।।२४।।

भक्तिर्या सा पदाम्भोजे कार्या निजगुरोः सदा ।
इष्टं वानिष्टमादिष्टं गुरुणा यत्तु गुर्वपि ।।२५।।

त्वरया परया कुर्याद् भक्त्या सम्यगजिह्मया ।
कर्मणा मनसा वाचा सदा भक्तिपरो गुरुम् ।।२६।।

निर्व्याजं पूजयेच्छिष्यो निजकार्यप्रसिद्धये ।
लोकोद्वेगकरी या च या च मर्मनिकृन्तिनी ।।२७।।

स्थित्युद्वेगकरी या च तां गिरं नैव भाषयेत ।
रम्यमत्युत्कटं चापि मनसोऽपि समीप्सितम् ।।२८।।

लोकविद्वेषणं रूपं न गृह्णीयात् कदाचन ।
इत्याचार्यपरः सम्यगाचार्यं यः समर्चयेत् ।। २९।।

कृतकृत्यः स वै शिष्यः परत्रेह च नन्दति ।।३०।।

---

अथ प्रवक्ष्ये दीक्षादौ पूजार्थं मण्डलोत्तमम् ।
चतुरस्रे चतुष्कोष्ठे कोणसूत्रचतुष्टयम् ।।१।।

मध्ये मध्ये यथा मत्स्या भवेयुः पातयेत्तथा ।
पूर्वापरायते द्वे द्वे मन्त्री याम्योत्तरायते ।।२।।

पातयेदेषु मत्स्येषु समं सूत्रचतुष्टयम् ।।३।।

पूर्ववत्कोणकोष्ठेषु तद्वत्सूत्रं निपातयेत् ।
तदुद्भूतेषु मत्स्येषु दद्यात्सूत्रचतुष्टयम् ।।४।।

ततः कोष्ठेषु मत्स्याः स्युस्तत्र सूत्राणि पातयेत् ।
यावच्छतद्वयं मन्त्री षट् पञ्चाशत्पदान्यपि ।।५।।

तावत्तेनैव विधिना तत्र सूत्राणि पातयेत् ।
षट्त्रिंशता पदैर्मध्ये लिखेत्पद्मं सलक्षणम् ।।६।।

बहिः पंक्त्या लिखेत्पीठं पंक्तियुग्मेन वीथिका ।
द्वारशोभोपशोभादीन् शिष्टाभ्यां परिकल्पयेत् ।।७।।

शास्त्रोक्तविधिना मन्त्री ततः पद्मं समालिखेत् ।
पद्मक्षेत्रस्य संत्यज्य द्वादशा(शां)शं ततः सुधीः ।।८।।

तन्मध्ये विभजेद् वृत्तैस्त्रिभिः समविभागतः ।
आद्यं स्यात् कर्णिकास्थानं केसराणां द्वितीयकम् ।।९।।

तृतीयं तत्र पत्राणां मुक्तांसे(शे)न दलाग्रकम् ।
बाह्यवृत्तान्तरालस्य मानं यद्विधिना सुधीः ।।१०।।

निधाय केसराग्रेषु परितोर्धनिशाकरान् ।
लिखित्वा सन्धिसंस्थानि तत्र सूत्राणि पातयेत् ।।११।।

दलाग्राणां च यन्मानं तन्मानं वृत्तमालिखेत् ।
तदन्तराले तन्मध्यसूत्रस्योभयतः सुधीः ।।१२।।

आलिखेद्वाह्यहस्तेन दलाग्राणि समन्ततः ।
दलमूलेषु युगशः केसराणि प्रकल्पयेत् ।।१३।।

एतत्साधारणं प्रोक्तं पङ्कजं तन्त्रवेदिभिः ।
पदानि त्रीणि पादार्थं पीठकोणेषु मार्जयेत् ।।१४।।

अवशिष्टैः पदैर्विद्वान् पीठगात्राणि कल्पयेत् ।
पदानि वीथिसंस्थानि मार्जयेत्पंक्त्यभेदतः ।।१५।।

दिक्षु द्वाराणि रचयेत् द्विश्चतुष्कोष्ठतस्ततः ।
पदैस्त्रिभिस्तथैकेन शोभाः स्युर्द्वारपार्श्वयोः ।।१६।।

उपशोभाःस्युरेकेन त्रिभिः कोष्ठैरनन्तरम् ।
अवशिष्टैः पदैःषड्भिः कोणानां स्याच्चतुष्टयम् ।।१७।।

रञ्जयेत्पञ्चभिर्वर्णैर्मण्डलं तन्मनोहरम् ।
पीतं हरिद्राचूर्णं स्यात् सितं तण्डुलसंभवम् ।।१८।।

कुसुम्भचूर्णमरुणं कृष्णं दग्धपुलाकजम् ।
बिल्वादिपत्रजं श्याममित्युक्तं वर्णपञ्चकम् ।।१९।।

अङ्गुलोत्सेधनिस्ताराः सीमारेखाः सिताः शुभाः ।
कर्णिकां पीतवर्णेन केसराण्यरुणेन च ।।२०।।

शुभ्रवर्णेन पत्राणि तत्सन्धी श्यामलेन च ।
रजसा रञ्जयेन्मन्त्री यद्वा पीतैव कर्णिका ।।२१।।

केसराः पीतरक्ताः स्युररुणानि दलान्यपि ।
संधयः कृष्णावर्णाः स्युः पीतेनाप्यसितेन वा ।।२२।।

रञ्जयेत्पीठगर्भाणि पादाः स्युररुणप्रभाः ।
गात्राणि तस्य शुक्लानि वीथिष्वपि चतसृषु ।।२३।।

आलिखेत्कल्पलतिका दलपुष्पफलान्विताः ।
वर्णैर्नानाविधैश्चित्राः सर्वदृष्टिमनोहराः ।।२४।।

द्वाराणि श्वेतवर्णानि शोभा रक्ताः समीरिताः ।
उपशोभा पीतवर्णा कोणान्यसितभानि च ।।२५।।

तिस्रो रेखा बहिः कुर्यात् सितरक्तासिताः क्रमात् ।
मण्डलं सर्वतोभद्रमेतत्साधारणं मतम् ।।२६।।

चतुरस्त्रं भुवं भित्त्वा दिग्भ्यो द्वादशधा सुधीः ।
पातयेत्तत्र सूत्राणि कोष्ठानां दृश्यते शतम् ।।२७।।

चतुश्चत्वारिंशदाढ्यं पञ्चात् षट्त्रिंशताम्बुजम् ।
कोष्ठैः प्रकल्पयेत् पीठं पंक्ता नैवात्र वीथिका ।।२८।।

द्वारशोभे यथापूर्वमुपशोभा न दृश्यते ।
अवशिष्टैः पदैः कुर्यात् षड्भिः कोणानि मन्त्रवित् ।।२९।।

विदध्यात् पूर्ववच्छेषमेवं वा मण्डलं मतम् ।
दीक्षादौ देवपूजार्थं सर्वतोभद्रमण्डलम् ।
सर्वतन्त्रानुसारेण प्रोक्तं सर्वसमृद्धिदम् ।।३०।।

अनुकूलं मनुं लब्ध्वा गुरोरेवं सुसंयतः ।
पुरस्क्रियां प्रकुर्वीत सप्रमाणं निगद्यते ।।३१।।

दीक्षितस्तु शुचौदेशे गुरुशुक्रोदये शुभे ।
लग्ने चोपचयस्थेऽपि विहीने पापवीक्षितैः ।।३२।।

पुण्यमासेऽथ दिवसे शुभे रिक्तादिवर्जिते ।
शुभग्रहादि संयुक्ते पुरश्चरणमाचरेत् ।।३३।।

जपो होमस्तर्पणंच मार्जनं द्विजभोजनम् ।
पुरश्चरणमेवं हि पञ्चाङ्गकमुदीरितम् ।।३४।।

कैश्चित्तुमार्जनस्थाने दत्त्वात्रैकालिकार्चनम् ।
पुरश्चरणमाख्यातं पञ्चाङ्गं मन्त्रिसत्तमैः ।।३५।।
यदिच्छति लभेतैतन्मनसापि तपोधन (:) ।
असाध्यमपि देवानां द्वीपान्तरगतं च यत् ।।३६।।

पञ्चाङ्गोपासनं कृत्वा यद्यदिष्टं तदाप्नुयात् ।
पञ्चाङ्गमेतत्कुर्वीत यः पुरश्चरणं बुधः ।।३७।।

स वै विजयते लोके विद्यैश्वर्यसुतादिभिः ।
गुरोर्लब्धस्य मन्त्रस्य सुप्रसन्नान्तरात्मनः ।।३८।।
पञ्चाङ्गोपासनं सिद्धेः पुरश्चैतद्विधीयते ।
यः पुरश्चरणं कुर्यात् स सर्वेषु विशिष्यते ।।३९।।

विद्यया पुत्रपौत्रैश्च धनधान्यादिसम्पदा ।
नानेन सदृशो धर्मो नानेन सदृशं तपः ।।४०।।

नानेन साधकं किंचिदिष्टार्थस्य कदाचन ॥४१॥

अथ किं तावदेतेषां पुरश्चरणमुच्यते ।
जपादिपञ्चकरणं तदित्येतन्न युज्यते ॥४२॥

प्रत्येकं करणे तेषामतिव्याप्तेः पृथक् पृथक् ।
मिलितानां तथात्वंचेन्मेलकं नातिरिच्यते ॥४३॥

जपाद्या मिलिताः पञ्च तथेत्यपि निरस्यते ।
एतेनाव्यवधानेन कृताःपञ्चतथेति चेत् ॥४४॥

मैवं पञ्चाङ्गताबाधात्.......नङ्गतास्थितेः ।
प्रत्येकं मिलिताङ्गः स्यादिति चेन्नोक्तदोषतः ॥४५॥

भवेदङ्गद्वयेनैवेत्यादौ वा का गतिर्भवेत् ।
अथ पञ्चाङ्गतेत्येतत् पञ्चावयवतार्थकम् ॥४६॥

षडङ्गयागविधिना त्वेतदप्यमनोरमम् ।
अमूललक्षणापत्तेर्दृष्टान्तो नैव संगतः ॥४७॥

यागस्येच्छाविशेषत्वा दुच्यतेतदुपासनम् ।
यथाविधि जपादीनां पञ्चाङ्गानि जपादयः ।
इच्छारूपो यथा यागः संकल्पो व्रतमुच्यते ॥४८॥

भवेदङ्गद्वयेनेत्याद्युक्तं यत्तदसङ्गतम् ।
अनुकल्पमुपादाय तत्र पञ्चाङ्गतास्थितेः ॥४९॥

एकत्वादनुकल्पस्य सर्वेषान्त्वय (न्द्वय)ङ्गताश्रुतिः ।
यद्यदङ्ग विहीयेतेत्याद्यप्येतेन युज्यते ॥५०॥

एतत्कण्ठरवेणैव प्राह चागस्त्यसंहिता ।
पञ्चाङ्गोपासनं भक्त्या पुरश्चरणमुच्यते ॥५१॥

मन्त्रसिद्ध्यन्तरापेक्षां विना वा येन सिद्ध्यति ।
मन्त्रः सकलसंमत्या तत्पुरश्चरणं मतम् ॥५२॥

विना न येन सिद्धः स्यान्मन्त्रो वर्षशतैरपि ।
इत्यादि नानातन्त्रेष्वप्येतदेव व्यवस्थितम् ॥५३॥

सिद्धिः प्रयोगयोग्यत्वं मन्त्राणामिह कीर्त्तिता ।
यद्वा इष्टविशेषोऽसाविति तर्कविदो विदुः ॥५४॥

निगद्यते गुरोर्भक्तिः प्रथमं जगतां हिता ।
प्रातः शिरसि शुक्लेऽब्जे त्रिनेत्रं द्विभुजं गुरुम् ॥१॥

वराभययुतं शान्तं स्मरेत्तन्नामपूर्वकम् ।
नमोऽस्तु गुरवे तुभ्यमिष्टदेव स्वरूपिणे ॥२॥

यस्यवाक्यामृतं हन्ति विषं संसारसञ्ज्ञकम् ।
गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो महेश्वरः ॥३॥

गुरुरेव परंब्रह्म तस्मादादौ तमर्चयेत् ।
सुप्रसन्ने गुरौ यस्य न सिद्धिस्तस्यनान्यथा ॥४॥

यस्य मन्त्रे च देवे च गुरौ च त्रिषु निश्चला ।
न व्यवच्छिद्यते भक्तिस्तस्य सिद्धिरदूरतः ॥५॥

यथा शिवस्तथा विद्या यथा विद्या तथा गुरुः ।
गुरुणा दर्शिते तत्त्वे तत्क्षणात्तन्मयो भवेत् ॥६॥

शिवे रुष्टे गुरुस्त्राता गुरौ रुष्टे न कश्चन ।
अविद्योवा सविद्योवा गुरुरेव सदा गतिः ॥७॥

यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते मनीषिणः ॥८॥

प्रतिपद्य गुरुं यस्तु मोहाद् विप्रतिपद्यते ।
स कल्पकोटि नरके पच्यते पुरुषाधमः ॥९॥

यथा सिद्धरसस्पर्शात्ताम्रं भवति काञ्चनम् ।
संनिधाने गुरोरेवं शिष्यः शिवमयो भवेत् ॥१०॥

गुरुशय्यासनं यानं पादुकांशुकपीठकम् ।
स्नानोदकं तथा छायां लङ्घयेन्न कदाचन ॥११॥

गुरोरग्रे पृथक्पूजामद्वैतं च विवर्जयेत् ।
दीक्षाव्याख्यां प्रभुत्वादि गुरोरग्रे परित्यजेत् ॥१२॥

नारकाश्चैव देहान्ते तिर्यक्षु प्रभवन्ति ते ।
ये गुर्ववज्ञां कुर्वन्ति पापिष्ठाः पुरुषाधमाः ॥१३॥

एतेषां नरकक्लेशनिस्तारो जायते कदा ।
यैः शिष्यैः शश्वदाराध्या गुरवोह्यवमानिताः ॥१४॥

पुत्रमित्रकलत्रादिसम्पद्भ्यः प्रच्युताहिते ।
अधिक्षिप्य गुरुं मोहात् परुषं प्रवदन्ति ये ॥१५॥

शूकरत्वं भवत्येव तेषां जन्मशतेष्वपि ।
ये गुरुद्रोहिणो मूढाः सततं पापकारिणः ।
तेषां च यावत्सुकृतं दुष्कृतं तन्न संशयः ॥१६॥

मन्त्रे च देवतायां च तथा मन्त्रप्रदे गुरौ ।
त्रिषु भक्तिः सदा कार्या सा हि प्रथमसाधनम् ॥१७॥

तीर्थान्मन्त्रोपदेशश्च श्रद्धा च जपकर्मणि ।
फलिष्यतीति विश्वासश्चैतत् सिद्धेश्च लक्षणम् ॥१८॥

---

पुरस्क्रियां प्रकुर्वीत तन्त्रोक्तफलसिद्धये ।
विनानया न सिद्ध्येत मन्त्रो वर्षशतैरपि ॥१॥

यस्यां कृतायां लभते साधको वाञ्छितं फलम् ।
किं होमैः किं जपैश्चैव किं मन्त्रन्यासविस्तरैः ॥२॥

रहस्यानां हि मन्त्राणां यदि न स्यात् पुरस्क्रिया ।
पुरस्क्रिया हि मन्त्रस्य प्रथमं बीजमुच्यते ॥३॥

वीर्यहीनो यथादेही सर्वकर्मसु न क्षमः ।
पुरश्चरणहीनो हि तथा मन्त्रः प्रकीर्तितः ॥४॥

पुरस्क्रियामथो कर्तुं स्थाननैयत्यमुच्यते ।
पुण्यक्षेत्रं नदीतीरं गुहा पर्वतमस्तकम् ॥५॥

तीर्थप्रदेशाः सिन्धूनां सङ्गमः पावनं वनम् ।
उद्यानानि विविक्तानि बिल्वमूलं तटं गिरेः ॥६॥

तुलसीकाननं गोष्ठं वृषशून्यः शिवालयः ।
अश्वत्थामलकीमूलं गोशाला जलमध्यतः ॥७॥

देवतायतनं कूलं समुद्रस्य निजं गृहम् ।
गुरूणां संनिधानं च चित्तैकाग्रस्थलं तथा ॥८॥

प्रेतभूम्यादिकं चैव तत्तत्कल्पप्रदर्शितम् ।
एषामन्यतमं स्थानमाश्रित्य जपमाचरेत् ॥९॥

---

उक्तानि मुनिभिर्यानि चासनानि निशामय ।
कुशासनं पुष्टिकरं काम्बलं दुःखमोचनम् ॥१॥
मृगाजिनं ज्ञानकरं वेलजं श्रीविवर्धनम् ।
वस्त्रासनं रोगहरं वैयाघ्रं सर्वसिद्धिदम् ॥२॥
अभिचारे कृष्णवर्णं रक्तं वश्यादिकर्मणि ।
शान्तिके धवलं प्रोक्तं विचित्रं सर्वकर्मसु ॥३॥
स्तम्भने गजचर्म स्यान् मारणे माहिषं तथा ।
मेषीचर्म तथोच्चाटे खड्गिजं वश्यकर्मणि ॥४॥
विद्वेषे जाम्बुकं प्रोक्तं भवेद्गोचर्म शान्तिके ।
वंशासने च दारिद्र्यं दौर्भाग्यं दारुजासने ॥५॥
धरण्यां दुःखसंभूतिः पाषाणे व्याधिसंभवः ।
तृणासने यशोहानिः पल्लवे चित्तविभ्रमः ॥६॥
इष्टकायामथाधिः स्यादेतत् साधारणे जपे ।
तदुक्तमागमार्थानां सिद्धशैवागमादिषु ॥७॥
वंशाश्मधरणीदारुतृणपल्लवनिर्मितम् ।
वर्जयेदासनं श्रीमान् दारिद्र्यव्याधिदुःखदम् ॥८॥
कृष्णाजिनं व्याघ्रचर्म कौशेयं वेत्रनिर्मितम् ।
वस्त्रासनं कम्बलं वा कल्पयेदासनं मृदु ॥९॥
नादीक्षितो विशेत् कश्चित् कृष्णसारासने गृही ।
विशेद्यतिर्वनस्थश्च ब्रह्मचारी च स्नातकः ॥१०॥
कुशाजिनाम्बरेणाढ्यं चतुरङ्गुलमुच्छ्रितम् ।
एकहस्तं द्विहस्तं वा चतुरस्रं समन्ततः ॥११॥

स्वस्तिकादिक्रमेणेत्थं विशेत्तत्र निरामयः ।
स्वास्तिकादीनि वक्ष्यामि चासनान्यथ सत्तम ॥१२॥

स्वस्तिकं पद्मकं वीरं वज्रंचेति चतुष्टयम् ।
जपे प्रशस्तमेतेषु पूजिते पुनरादिमे ॥१३॥

अथैषां लक्षणं वक्ष्ये स्वस्त्यादीनां यथाक्रमम् ।
जानूर्वोरन्तरे कृत्वा सम्यक् पादतले उमे ॥१४॥

ऋजुकायः समासीनः स्वस्तिकं तदुदाहृतम् ।
वामोरूपरि विन्यस्य दक्षिणं चरणं बुधः ॥१५॥

वामं पुनर्दक्षिणोरौ व्युत्क्रमस्य विधानवित् ।
धृत्वा कराभ्यामङ्गुष्ठे निधाय चिबुकं हृदि ॥१६॥

नासाग्रं वोक्षयेद्विद्वान् पद्मासनमिदं मतम् ।
जपादौ नैवमाख्यातं पद्मासनमिदं बुधैः ॥१७॥

कृताञ्जलिपुटोभूत्वेत्यादिवाक्यावलोकनात् ।
वामोरौ दक्षिणं पादं न्यसेद्वामं तथान्यतः ॥१८॥

एतावदेव निर्वाह्य जपहोमादिकं चरेत् ।
वचनादपि सिद्धं स्यादिदमित्यवगम्यताम् ॥१९॥

नारदीये यतः प्राह नारायणमतौ मुनिः ।
उभाभ्यामूरूमूलाभ्यामग्रपादावुभावपि ॥२०॥
उपर्यारोप्य चासीत पद्मं नाम तदासनम् ।
एकं पादं तथैकस्मिन् विन्यस्योरुणि संस्थितम् ।
इतरस्मिन् तथा चोरौ वीरासनमुदीरितम् ॥२१॥

मेढ्रादुपरि विन्यस्य सव्यं गुल्फं तथोपरि ।
गुल्फान्तरं च विन्यस्य वज्रासनमुदीरितम् ॥२२॥

---

अथ मुद्राः प्रवक्ष्यामि दर्शनीयाः प्रयत्नतः ।
याभिर्विरचिताभिश्च मोदन्ते मन्त्रदेवताः ।।१।।

काश्चित्काश्चित् प्रकाश्यन्ते कुत्रकुत्रापि मुद्रिकाः ।
बिल्वाख्या विदधौ वेणुंपद्ममालागदाः क्रमात् ।।२।।

ज्ञानमुद्रा भगवतो रामस्य सशरं धनुः ।
श्रीवत्सकौस्तुभौ पर्शुर्गारुडी मोहनी परा ।।३।।

नारसिंही च वाराही हयग्रीवी च तत्प्रिया ।
काममुद्रा तथा चास्य विष्णोरेताः प्रकीर्तितः ।।४।।

लिङ्गयोनी त्रिशूलाक्षे वराभीतिमृगात्मिका ।
खट्वाङ्गा च कपाला च डमरुः शिवमुद्रिकाः ।।५।।

सूर्यस्यैकैव पद्माख्या दन्तविघ्नावपि क्रमात् ।
पाशाङ्कुशौ पर्शुलड्डू बीजपूरा गणेशितुः ।।६।।

पाशाङ्कुशवराभीतिखड्गाः शक्तेर्धनुः शरौ ।
चर्माख्या मौसली दौर्गी लक्ष्मीमुद्रास्तदर्चने ।।७।।

वीणाव्याख्याक्षपुस्तानि वाग्वादिन्याः प्रपूजने ।
सप्तजिह्वाह्वया मुद्रा विज्ञेया वह्निपूजने ।।८।।

त्रिपुरायास्तु पूजायां दशमुद्राः प्रकीर्तिताः ।
संक्षोभमुद्रा प्रथमा द्वितीया कर्षिणीमता ।।९।।

तृतीया द्राविणी ज्ञेया त्रिखण्डावाहिनी मता ।
उन्मादिनी तथा योनिस्तथावेशकरी परा ।।१०।।

महाङ्कुशा खेचरी च बीजमुद्रापरा क्रमात् ।
कुम्भमुद्राभिषेकेस्यात् प्रार्थने प्रार्थनाह्वया ।।११।।

वासुदेवाह्वया ध्याने तन्त्रविद्भिरुदीरिता ।
कालकर्णीकुम्भनादबिन्दुविस्मयसंज्ञिका: ।।१२।।

करकच्छपिका मुद्रा तत्त्वमुद्रा परा भवेत् ।
युक्ता या मुद्रिका यत्र तत्र तां विनियोजयेत् ।।१३।।

उद्देशानुक्रमादासामुच्यन्ते लक्षणानि च ।।१४।।

उद्धृतं वामकाङ्गुष्ठं दक्षाङ्गुष्ठेन योजयेत् ।
तस्याग्रं पीडयित्वा च दक्षहस्ताङ्गुलीगणै: ।।१५।।

पीडयेत्ता वामहस्तशाखाभिर्हृदि संयत: ।
स्थापयेदुच्चरन्मन्त्रं मारं बिल्वाह्वया मता ।।१६।।

चक्रमुद्राभिधातव्या निवेद्यार्पणकर्मणि ।
वामाङ्गुष्ठन्तु संगृह्य दक्षिणेन तु मुष्टिना ।।१७।।

कृत्वोत्तानां ततो मुष्टिमङ्गुष्ठन्तु प्रसारयेत् ।
वामाङ्गुल्यस्तथा श्लिष्टा: संयुता: सुप्रसारिता: ।।१८।।

दक्षिणाङ्गुष्ठसंश्लिष्टा मुद्रैषा शङ्खसन्निभा ।
ओष्ठे वामकराङ्गुष्ठो लग्नस्तस्य कनिष्ठिका ।।१९।।

दक्षिणाङ्गुष्ठसंयुक्ता तत्कनिष्ठा प्रसारिता ।
तर्जनीमध्यमानामा: किंचित्सङ्कोच्य चालिता: ।।२०।।

वेणुमुद्रा भवेदेषा सुगुप्ता प्रेयसी हरे: ।
पद्माख्या या भवेन्मुद्रा सा वाच्यानुपदं पुन: ।।२१।।

स्पृशेत्कण्ठादिपादान्तं तर्जन्याङ्गुष्ठनिष्ठया ।
करद्वयेनमालावन्मुद्रेयं वनमालिका ।।२२।।

अन्योन्याभिमुखौ कृत्वा हस्तौ तु ग्रथिताङ्गुली ।
अङ्गुल्यौ मध्यमे भूय: संलग्ने संप्रसारिते ।
गदामुद्रेयमुदिता विष्णो: सन्तोषवर्द्धिनी ।।२३।।

तर्जन्यङ्गुष्ठकौ सक्तावग्रतो हृदि विन्यसेत् ।
ज्ञानमुद्रा भवेदेषा वक्तव्यं सशरं धनु: ।।२४।।

अन्योन्यस्पृष्टकरयोर्मध्यमानामिकाङ्गुली ।
अङ्गुष्ठेन तु बध्नीयात् कनिष्ठामूलसंश्रिते ।।२५।।

तर्जिन्यौकारयेदेषा मुद्रा श्रीवत्ससंज्ञिका ।
अनामास्पृष्टसंलग्ना दक्षिणस्य कनिष्ठिका ॥२६॥

कनिष्ठामन्यया बद्ध्वा तर्जन्या दक्षया तथा ।
वामानामाञ्चबध्नीयाद्दक्षाङ्गुष्ठस्य मूलके ॥२७॥

अङ्गुष्ठमध्यमे भूयः संयोज्य सरलाः पराः ।
चतस्रोऽप्यग्रसंलग्ना मुद्राकौस्तुभसंज्ञिका ॥२८॥

हस्तौ तु विमुखौ कृत्वा ग्रथयित्वा कनिष्ठिके ।
मिथस्तर्जनिके श्लिष्टे श्लिष्टावङ्गुष्ठकौ तथा ॥२९॥

मध्यमानामिके द्वे तु द्वौ पक्षाविव चालयेत् ।
एषा गरुडमुद्रास्याद् विष्णोः सन्तोषकारिणी ॥३०॥

मूर्द्धस्थाङ्गुष्ठमुष्टी द्वे मुद्रा सा मोहिनी भवेत् ।
जानुमध्ये करौ कृत्वा चिबुकोष्ठौ समावृतौ ॥३१॥
मुखं विवृतकं कुर्याद् लेलिहानाञ्च जिह्विकाम् ।
नारसिंही भवेदेषा मुद्रा तत्प्रीतिवर्धिनी ॥३२॥

देवोपरि करं वामं कृत्वोत्तानमधः सुधीः ।
नामयेदिति संप्रोक्ता मुद्रा वाराहसंज्ञिका ॥३३॥
वामे हस्ततले दक्षाङ्गुलीस्तु तास्त्वधोमुखीः ।
संरोध्य मध्यमां तासामुन्नम्याथ विकुञ्चयेत् ॥३४॥
हयग्रीवाह्वयामुद्रा तन्मूर्तेरनुकारिणी ।
हस्तौ तु संपुटीकृत्य प्रसृताङ्गुलिकौ तथा ॥३५॥
तर्जन्यौ मध्यमापृष्ठे अङ्गुष्ठौ मध्यमास्थितौ ।
काममुद्रेयमुदिता सर्वदेवप्रियङ्करी ॥३६॥

महादेवप्रियाणां तु कथ्यन्ते लक्षणानि तु ।
उच्छ्रितं दक्षिणाङ्गुष्ठं वामाङ्गुष्ठेन वेष्टयेत् ॥३७॥
तं च तत्करशाखाभिर्गाढं बद्ध्वा विशारदः ।
वामाङ्गुलीर्दक्षिणाभिरङ्गुलीभिश्च बन्धयेत् ॥३८॥
लिङ्गमुद्रेयमाख्याता शिवसांनिध्यकारिणी ।
मिथः कनिष्ठिके बद्ध्वा तर्जनीभ्यामनामिके ॥३९॥

अनामिकोर्ध्वसंश्लिष्टदीर्घमध्यमो (मयो) रधः ।
अङ्गुष्ठाग्रद्वयं न्यस्येद्योनिमुद्रेयमीरिता ॥४०॥

अङ्गुष्ठेन कनिष्ठां तु बद्ध्वा श्लिष्टाङ्गुलित्रयम् ।
प्रसारयेदक्षमालाऽनुपदं च वराभये ॥४१॥

पञ्चाङ्गुल्यो दक्षिणास्तु मिलिता ह्यूर्ध्वमुन्नताः ।
खट्वाङ्गपात्रवद्वामहस्तं वामाङ्के न्यसेत् ॥४२॥

ततश्चोच्छ्रितवत् कुर्यात् मुद्रा कापालिकी भवेत् ।
मुष्टिं च शिथिलां बद्ध्वा किंचिदुच्छ्रितमध्यमाम् ॥४३॥

दक्षिणान्तूर्ध्वमुन्नम्य कर्णदेशे प्रचालयेत् ।
एषा मुद्रा डमरुका मृगमुद्रा जुहोतिषु ॥४४॥

हस्तौ तु सम्मुखौ कृत्वा सन्नतावुन्नताङ्गुली ।
तलान्तर्मिलिताङ्गुष्ठा पद्ममुद्रा विवस्वतः ॥४५॥

अथो गणेशमुद्राणामुच्यन्ते लक्षणानि च ।
उत्तानोर्ध्वमुखी मध्या सरलाबद्धमुष्टिका ॥४६॥

दन्तमुद्रा निगदिता सर्वागमविशारदैः ।
तर्जनीमध्यमासन्धिनिर्गताङ्गुष्ठमुष्टिका ॥४७॥

अधोमुखी दीर्घरूपा मध्यमा विघ्नमुद्रिका ।
वाममुष्टिस्थतर्जन्या दक्षमुष्टिस्थतर्जनी ॥४८॥

संयोज्याङ्गुष्ठकाग्राभ्यां तर्जन्यग्रे स्वकेक्षिपेत् ।
एषा पाशाह्वया मुद्रा विद्वद्भिः परिकीर्तिता ॥४९॥

अङ्कुशाख्या तु या मुद्रा सा वाच्या शंखसंस्कृतौ ।
तले तलं च करयोस्तिर्यक् संयोज्य चाङ्गुलीः ॥५०॥

संहताः प्रसृताः कुर्यान् मुद्रेयं पर्शुसंज्ञिका ।
लड्डुका बीजपूरा च प्रसिद्धत्वादुपेक्षिता ॥५१॥

शाक्तेयीनां च मुद्राणां कथ्यन्ते लक्षणानि तु ।
पाशाङ्कुशौ निगदितौ पूर्वमेव यथाविधि ॥५२॥

अधः कृतो दक्षहस्तः प्रसृतो वरमुद्रिका ।
ऊर्ध्वीकृतो वामहस्तः प्रसृतोऽभयमुद्रिका ॥५३॥

कनिष्ठानामिकेबद्ध्वा स्वाङ्गुष्ठेनैव दक्षतः ।
शिष्टाङ्गुलीतु प्रसृते संमृष्टे खड्गमुद्रिका ।।५४।।

वामस्य मध्यमाग्रं तु तर्जन्यग्रे नियोजयेत् ।
अनामिकां कनिष्ठां च वामाङ्गुष्ठेन पीडयेत् ।।५५।।

दर्शयेद्वामके स्कन्धे धनुर्मुद्रेयमीरिता ।
दक्षमुष्टिस्थ तर्जन्या दीर्घयावाणमुद्रिका ।।५६।।

वामहस्तं तथा तिर्यक्कृत्वा चैव प्रसारयेत् ।
आकुञ्चिताङ्गुलि कुर्याच्चर्ममुद्रेयमीरिता ।।५७।।

मुष्टि कृत्वा तु हस्ताभ्यां वामस्योपरि दक्षिणम् ।
कुर्वीत मौशली मूर्ध्नि कृता दौर्ग्येव सा भवेत् ।।५८।।

चक्रमुद्रां तथा बद्ध्वा मध्यमे द्वे प्रसार्य च ।
कनिष्ठिके तथानीय तदग्रेङ्गुष्ठकौ क्षिपेत् ।।५९।।

लक्ष्मीमुद्रा पराप्येषा सर्वसम्पत्करी भवेत् ।
वीणावादनवद्धस्तौ कृत्वा संचारयेच्छिरः ।
वीणामुद्रेयमाख्याता सरस्वत्याः प्रियङ्करो ।।६०।।

दक्षिणाङ्गुष्ठतर्जन्यावग्रलग्ने पराङ्गुलीः ।
प्रसार्य संहतोत्ताना प्रोक्ता व्याख्यानमुद्रिका ।।६१।।

वाममुष्टि स्वाभिमुखं कुर्यात् पुस्तकमुद्रिका ।
मणिबन्धस्थितौ कृत्वा प्रसृताङ्गुलिकौ करौ ।।६२।।

कनिष्ठाङ्गुष्ठयुगले मिलित्वान्तः प्रसारयेत् ।
सप्तजिह्वाख्यमुद्रेयं वैश्वानरप्रियङ्करी ।।६३।।

त्रिपुरायाः प्रवक्ष्यामो मुद्राः संक्षेपतोऽधुना ।
मध्यमामध्यगे कृत्वा कनिष्ठेऽङ्गुष्ठबो(रो)धिते ।।६४।।

तर्जन्यौ दण्डवत् कुर्यान् मध्यमोपर्यनामिके ।
एषैव प्रथमा मुद्रा सर्वसंक्षोभकारिणी ।।६५।।

मध्यमातर्जनीभ्यां तु कनिष्ठानामिके समे ।
अङ्कुशाकाररूपाभ्यां मध्यगे परमेश्वरि ।।६६।।

इयमाकर्षिणीमुद्रा सर्वाकर्षणकारिणी ।
प्रथमायास्तु मुद्राया मध्यमे सरले यदा ।
जायेते परमेशानि सर्वविद्राविणी मता ।।६७।।

परिवर्त्य करौ स्पृष्टावङ्गुष्ठौ कारयेत्समौ ।
अनामान्तर्गते कृत्वा तर्जन्यौ कुटिलाकृती ।।६८।।

कनिष्ठिके नियुञ्जीत निजस्थाने महेश्वरि ।
त्रिखण्डेयं समाख्याता त्रिपुराह्वानकर्मणि ।।६९।।

सम्मुखौ तु करौ कृत्वा मध्यमामध्यगेऽन्तजे ।
अनामिके तु सरले तद्बहिस्तर्जनीद्वयम् ।।७०।।

दण्डाकारौ ततोऽङ्गुष्ठौ मध्यमामध्यदेशगौ ।
मुद्रैषोन्मादिनी प्रोक्ता क्लेदिनी सर्वयोषिताम् ।।७१।।

मध्यमे कुटिले कृत्वा तर्जन्युपरिसंस्थिते ।
अनामिकामध्यगते तथैव हि कनिष्ठिके ।।७२।।

सर्वा एकत्र संयोज्य अङ्गुष्ठपरिपीडिताः ।
योनिमुद्रा भवेदेषा त्रिपुरातोषकारिणी ।।७३।।

पुटाकारौ करौकृत्वा तर्जन्यावङ्कुशाकृती ।
वरिवर्त्यकरेणैव मध्यमे तदधोगते ।।७४।।

क्रमेण देवि तेनैव कनिष्ठानामिकादयः ।
संयोज्य निबिडाः सर्वाः अङ्गुष्ठावग्रदेशतः ।।७५।।

मुद्रेयं परमेशानि सर्वावेशकरीमता ।
उन्मादिन्यास्त्वनामे द्वे अधः कृत्वाङ्कुशाकृती ।।७६।।

तर्जन्यावपि तेनैव क्रमेण विनियोजयेत् ।
असौ महाङ्कुशा मुद्रा सर्वकामार्थसाधिनी ।।७७।।

सव्यं दक्षिणदेशे तु सव्यदेशे तु दक्षिणम् ।
बाहुं कृत्वा महेशानि हस्तौ संपरिवर्तयेत् ।।७८।।

कनिष्ठानामिके देवि युक्त्वा तेन क्रमेण च ।
तर्जनीभ्यां समाक्रान्ते सर्वोर्ध्वमपि मध्यमे ।।७९।।

अङ्गुष्ठौ तु महेशानि सरलावपि कारयेत् ।
इयं सा खेचरी नाम्ना मुद्रा सर्वोत्तमोत्तमा ।।८०।।

परिवर्त्त्य करौ स्पष्टावर्धचन्द्राकृति प्रिये ।
तर्जन्यङ्गुष्ठयुगलं युगपत्कारयेत्ततः ।।८१।।

अधः कनिष्ठावष्टब्धे मध्यमे विनियोजयेत् ।
तथैव कुटिले योज्ये सर्वाधस्तादनामिके ।।८२।।

बीजमुद्रेयमचिरात् सर्वसिद्धिकरीमता ।
दशाङ्गुष्ठं पराङ्गुष्ठे क्षिप्त्वा हस्तद्वयेन तु ।।८३।।

सावकाशात्मकं मुष्टिं कुर्यात् सा कुम्भमुद्रिका ।
प्रसृताङ्गुलिकौ हस्तौ मिथः शिलष्टे (ष्टौ) च संमुखौ।।८४।।

कुर्यात्स्वहृदये सेयं मुद्रा प्रार्थनसंज्ञिका ।
अञ्जल्या ध्यानमुद्रास्याद्वासुदेवाह्वया च सा ।।८५।।

अङ्गुष्ठावुन्नतौ कृत्वा मुष्ट्योः संलग्नयोर्द्वयोः ।
तावेवाभिमुखौ कुर्यात् बालकर्ण्यभिरक्षणे ।।८६।।

मुष्ट्योरूर्ध्वकृताङ्गुष्ठौ तर्जन्यग्रे तु संन्यसेत् ।
सर्वरक्षाकरीह्येषा कुन्तमुद्रा समीरिता ।।८७।।

मुष्टिरूर्ध्वीकृताङ्गुष्ठा दक्षिणा नादमुद्रिका ।
तर्जन्यङ्गुष्ठसंयोगादग्रतो बिन्दुमुद्रिका ।।८८।।

दक्षिणा निबिडा मुष्टिः नामिकार्पिततर्जनी ।
मुद्रा विस्मयसंज्ञा स्यात् विस्मयावेशकारिणी ।।८९।।

हस्तौ तु संमुखौ शिलष्टौ तिर्यक् संयोज्यचोच्छ्रितौ ।
अङ्गुष्ठौ संहतौ कार्यौ हृदि कच्छपिका भवेत् ।।९०।।

अङ्गुष्ठानामिके शिलष्टे वामे वामक्रमेण चेत् ।
तत्त्वमुद्रेयमुदिता महापातकनाशिनी ।।९१।।

---

जपकर्तुश्च यत्कृत्यं यच्चाकृत्यं शृणुष्वतत् ।
मन्त्रं साधयमानस्तु त्रिसन्ध्यं देवमर्चयेत् ।।१।।

द्विसन्ध्यमेकसन्ध्यं वा न मन्त्रं केवलं जपेत् ।
देवी चित्तगता कार्या कार्यं च हृदयंस्थिरम् ।।२।।

तत्त्वजप्तान्नपानीयैः कुर्यात्पानादिभोजनम् ।
एकग्रामस्थितो नित्यं गत्वा वन्देत स्वंगुरुम् ।।३।।

प्रणामस्तु दिशान्यत्र देवतावन्दनं सदा ।
नित्यं नैमित्तिकं कुर्यात् सङ्गमं साधुभिः सह ।।४।।

स्नायाच्च पञ्चगव्येन केवलेनामलेन वा ।
आज्येन दध्नाक्षीरेण तिलकल्केन वा कृती ।।५।।

पुरश्चर्याविधौ तद्वत् स्नानं कुर्याद्विशुद्धये ।
शक्तौ त्रिषवणं स्नानमशक्तौ द्विः सकृत्तथा ।।६।।

अस्नातस्य फलं नास्ति नचातर्पयतः पितृन् ।
अन्यानि काम्यकर्माणि तथा साधुसमागमम् ।।७।।

स्त्रीशूद्रपतितव्रात्यनास्तिकोच्छिष्टभाषणम् ।
असत्यभाषणं चोक्ति कुटिलां परिवर्जयेत् ।।८।।

सत्येनापि न भाषेत जपहोमार्चनादिषु ।
यदि भाषति तत्काले सत्यैः प्रस्तुतसाधकः ।।९।।

अन्यथानुष्ठितं सर्वं भवत्येव निरर्थकम् ।
वाङ्मनः कर्मभिर्नित्यं निःस्पृहो वनितादिषु ।।१०।।

अभ्यङ्गनृत्यगीतादिदर्शनादिकमुत्सृजेत् ।
वर्जयेद्गन्धलेपं च पुष्पधारणमेव च ।।११।।

मैथुनं तत्कथालापं तद्गोष्ठींच विवर्जयेत् ।
स्मरणं कीर्त्तनं केलिः प्रेक्षणं गुह्यभाषणम् ।।१२।।

संकल्पोऽव्यवसायश्च क्रियानिष्पत्तिरेव च ।
एवमष्टविधं प्रोक्तं मैथुनं तन्त्रवेदिभिः ।।१३।।

नादद्यात् कस्यचित्किंचित् न विनोदी भवेद्बुधः ।
अस्नातांश्च द्विजाञ्छूद्रान् स्त्रियो नैव स्पृशेत्तदा ।।१४।

त्यजेदुष्णोदकस्नानमनिवेदित भोजनम् ।
प्राणहिंसान्न कुर्वीत पुरश्चरणकृद्द्विजः ।।१५।।

गोशुश्रूषादिकं चैव कल्पोक्तं विधिवच्चरेत् ।।१६।।

---

ततो भक्ष्यमभक्ष्यं च तदानी यद्वदाम्यहम् ।
नाना तन्त्रानुसारेण मन्त्रिणां हितकाम्यया ।।१।।

भै (भा)क्ष्यं हविष्यं दुग्धान्नं शाकं च दधियावकम् ।
पयो मूलं फलं वापि यद्यद्यत्रोपपद्यते ।।२।।

अन्यत्रापि समाख्यातं भक्ष्याणां लक्षणं बुधैः ।
भक्ष्यं हविष्यं शाकानि पयोमूलं फलं तथा ।।३।।

शक्तुकं क्षीरमात्रं वा पुरश्चरणकृद्द्विजः ।
हैमन्तिकं सितास्विन्नं धान्यं मुद्गास्तिला यवाः ।।४।।

कलायकङ्कुनीवाराः वास्तूकं हिलमोचिका ।
षष्टिकाकालशाकं च मूलकं केमुकेतरत् ।।५।।

कन्दं सैन्धवसामुद्रे लवणे दधिसर्पिषी ।
पयोऽनुद्धृतसारं च पनसाम्रहरीतकी ।।६।।

पिप्पली जीरकं चैव नागरङ्गं च तित्तली (तिन्तिणी) ।
कदली लवलीधात्रीफलान्यगुडमैक्षवम् ।।७।।

अतैलपक्वं मुनयो हविष्यान्नं प्रचक्षते ।
हविष्येषु यवा मुख्यास्तदनु व्रीहयः स्मृताः ।।८।।

माषकोद्रवसिद्धार्थान् चणकोद्दालकानपि ।
मसूरचीनकुलत्थान् सर्वाभावेऽपि वर्जयेत् ।।९।।

श्रीमतां दानयुक्तानां शुचीनां धर्मधीजुषाम् ।
सत्कुलस्थानजातानां भिक्षाशीलोऽग्रजन्मनाम् ।।१०।।

---

ब्रह्मपत्रे तु भुञ्जीत मध्यपत्रं तु वर्जयेत् ।
दक्षं ब्रह्मोत्तरं विष्णुर्मध्यपत्रं महेश्वरः ।।१।।

ग्राह्यं वह्नि विनावस्तु नान्यस्मात् सति सम्भवे ।
असम्भवे वहिस्तीर्थात् प्रगृह्णीयादपर्वणि ।।२।।

तत्रासमर्थोऽनुदिनं गृह्णीयाद्दिनभोजनम् ।
विशुद्धादधिकेरागाद्गृहीते नैव सिध्यति ।।३।।

मृदु कोष्णं सुपक्वं च कुर्याद्वैलब्धभोजनम् ।
नेन्द्रियाणां यथा वृद्धिस्तथाभुञ्जीत साधकः ।।४।।

अन्यथा भोजनाद्दोषात् सिद्धिहानिश्च जायते ।
यद्वा तद्वा परित्याज्यं दुष्टान्नं मन्त्रिभिः सदा ।।५।।

प्रशस्तान्नं समश्नीयान् मन्त्रसिद्धिसमीहया ।
जलाद्वृद्धिस्तरोर्यद्वदिन्द्रियाणां तथान्नतः ।।६।।

तस्मात्सर्वप्रयत्नेन शस्तान्नाशी भवेन्नरः ।
मधु मांसं तथा क्षारलवणं तैलमेव च ।।७।।

स्विन्नं पर्युषितं चैव निःस्नेहं कीट दूषितम् ।
काञ्जिकं गृञ्जनं बिल्वं कलञ्जं लशुनं तथा ।।८।।

मसूरं कोद्रवं माषं मन्तूकं चणकादिकम् ।
ताम्बूलं कांस्यपात्रे च दिवाभोजनमेव च ।।९।।

एवमादीनि चान्यानि जपकाले विवर्जयेत् ।
अन्यथा भोजनात्तेषां सिद्धिं नाप्नोति साधकः ।।१०।।

जपमालाविधानं च संक्षेपेण निगद्यते ।
तद्भेदस्तत्फलं चापि मन्त्रिणां हितकाम्यया ।।११।।

अल्पायासप्रसाध्या या बहुसिद्धिप्रदायिनी ।
प्रथमं वर्णमालैव गद्यते सिद्धिकांक्षिणाम् ॥१२॥

अनुलोमविलोमैस्तैर्बिन्दुवन्मातृकाक्षरैः ।
क्षमेरुकैः साष्टवर्गैः क्लिप्तया वर्णमालया ॥१३॥

प्रत्येकं वर्णयुङ्मन्त्राः जप्ताः स्युः क्षिप्रसिद्धिदाः ।
वैरिमन्त्राअपि नृणामन्ये मन्त्राश्च किं पुनः ॥१४॥

अकचटतपयशा वर्गाद्यार्णाः समीरिताः ।
मन्त्राणां वर्णयुक्तत्वं प्रथमं वर्णमुच्चरेत् ॥१५॥

ततः समुच्चरेन्मन्त्रमेवमन्यत्र दर्शनात् ।
अनया योजपं कुर्यात् तस्य सिद्धिरदूरतः ॥१६॥

अत्राङ्गुलिजपंकुर्वन् साङ्गुष्ठाङ्गुलिभिर्जपेत् ।
अङ्गुष्ठेन विना कर्म कृतं तदफलं भवेत् ॥१७॥

कनिष्ठानामिका मध्या चतुर्थी तर्जनी मता ।
तिस्त्रोङ्गुल्यास्त्रिपर्वाः स्युर्मध्यमाचैक पर्विका ॥१८॥

पर्वद्वयं मध्यमाया जपकाले विवर्जयेत् ।
एतं मेरुं विजानीयाद्ब्रह्मणा दूषितं स्वयम् ।
आरभ्यानामिकामध्यात् प्रदक्षिणमनुक्रमम् ॥१९॥

तर्जनीमूलपर्यन्तं जपेद्दशसु पर्वसु ।
अथवा मध्यमानामामध्यपर्वयुगात्मकम् ॥२०॥

मेरुं प्रदक्षिणीकुर्वन्ननामामूलपर्वणि ।
आरभ्यमध्यमामूलपर्यन्तं गणयेद्बुधः ॥२१॥

अङ्गुलीर्न वियुञ्जीत किंचित्सङ्कोचयेत्तलम् ।
अङ्गुलीनां वियोगेतु छिद्रेषु स्रवते जपः ॥२२॥

अङ्गुल्यग्रे तु यज्जप्तं यज्जप्तं मेरुलङ्घने ।
पर्वसन्धिषु यज्जप्तं तत्सर्वं निष्फलं भवेत् ॥२३॥

गणनाविधिमुल्लङ्घ्य यो जपेत्तु प्रमादतः ।
गृह्णन्ति राक्षसा यस्मान्नियतं गणयेद्बुधः ॥२४॥

नित्यं जपं करे कुर्यान्नतु काम्यमबोधनात् ।
मालाभिस्तु प्रकुर्वीत नित्यं काम्यं च साधकः ॥२५॥

आदिक्षान्तार्णयोगित्वादक्षमालेति कीर्तिता ।
तद्वर्णसंख्यमालाभिर्जपमालां प्रकल्पयेत् ।।२६।।

रुद्राक्षैः सर्वकामाप्तिः शङ्खैः कीर्त्तिधनाप्तये ।
पद्माक्षाः पुष्टिलक्ष्मीदाः शत्रुनाशकराः सदा ।।२७।।

पुत्रञ्जीवभवाः पुत्र पशुधीधान्यवृद्धिदाः ।
मुक्ताभी रचिता माला सौभाग्यं विपुलां श्रियम् ।।२८।।

मन्त्रप्रत्यक्षतासिद्धि शान्तिकं चानुपौष्टिकम् ।
मुक्ति च तनुते तद्वत् स्फाटिक्यप्यक्षमालिका ।।२९।।

सारस्वते पद्मरागाः पुष्कले च धने तथा ।
सौवर्णी राजती माला सर्वान् कामान् प्रयच्छति ।।३०।।

सारस्वते प्रबालोत्था वश्येऽधिकधनागमे ।
पापक्षयकरी कौशी रुद्राक्षादिकुशान्तकैः ।।३१।।

सर्वैरेभिर्विरचिता माला स्यान्मुक्तये नृणाम् ।
उच्चाटनेऽश्वदन्तानां मालाः प्रोताश्चबालकैः ।।३२।।
खरदन्तैरधोभूतैर्मनुष्यस्नायुतन्तुना ।
ग्रथितैर्निर्मितामाला शत्रूणां नाशिनी मता ।।३३।।
प्रेतदन्तैरधोभूतैः कर्तव्या जपमालिका ।
साध्यदेहभवैः केशैः प्रोतव्या द्वेषकर्मणि ।।३४।।
वैष्णवे तुलसीमाला गजदन्तैर्गणेश्वरे ।
त्रिपुराया जपे शस्ता इन्द्राक्षैरक्तचन्दनैः ।।३५।।
महाशङ्खमयीज्ञेया नीलसारस्वते मनौ ।
अङ्गुलीजपसंख्यानमेकमेवमुदाहृतम् ।।३६।।
पुत्रञ्जीवैर्दशगुणं शतं शंखैः सहस्त्रकम् ।
प्रबालै मलिरत्नैश्च दशसाहस्त्रकं स्मृतम् ।।३७।।
तदेव स्फाटिकैः प्रोक्तं मौक्तिकैर्लक्षमुच्यते ।
स्वर्णैर्दशगुणा सैव सर्वैः शतगुणं तथा ।।३८।।
कुशग्रन्थ्या च रुद्राक्षैरनन्तगुणितं भवेत् ।
शुद्धपद्माक्षमालाभिरपिस्यादमितं फलम् ।।३९।।

मातृकावर्णसंभूतमालयापिच तत्फलम् ।
अथवा तां शतैः कुर्यात्सर्वसाधारणे जपे ।।४०।।

पञ्चाशद्भिः काम्यकर्मसिद्धिः स्याच्चतुरुत्तरैः ।
अष्टोत्तरशतैः सर्वसिद्धिरुक्ता कृतस्रजा ।।४१।।

मोक्षार्थी पञ्चविंशत्या धनार्थी त्रिंशताजपेत् ।
पुष्ट्यर्थी सप्तविंशत्या पञ्चदश्याभिचारिके ।।४२।।

नारदीयेतु संप्रोक्तं न पञ्चदश कस्यचित् ।
अनयोः पक्षयोस्तस्माद्विकल्पः स्याद्व्यवस्थितः ।।४३।।

व्यवस्था चेयमत्रस्यान्नस्यादष्टाक्षरे मनौ ।
पुरुषस्येति तस्याथो याकस्यचिदितिश्रुतम् ।
अथवा योजनीयन्तन्मतभेदेन मन्त्रिभिः ।।४४।।

अथातो ग्रथनं वक्ष्ये मालानां तन्त्रदर्शितम् ।
एकभुक्तं विधायादौ साधको ग्रथयेत् स्वयम् ।।४५।।

स्वयं च माला ग्रथितेत्यादिना यन्निषिध्यते ।
तच्चन्दनसकाशेन पुष्पस्रक्परमिष्यते ।।४६।।

कृतनित्यक्रियः शुद्धः उक्तेष्वेतेषु मन्त्रवित् ।
यथालाभं यथाकाममक्षाण्यानीय यत्नतः ।।४७।।

मिथः सदृशरूपाणि नातिस्थूलकृशान्यपि ।
कीटादिभिरदुष्टानि न जीर्णानि नवानि वै ।।४८।।

प्रक्षाल्य पञ्चभिर्गव्यैस्तान्यक्षाणि पृथक् पृथक् ।
विग्रन्थि द्विजपुण्यस्त्रीनिर्मितं त्रिगुणीकृतम् ।।४९।।

त्रिगुणीकृत्य तत्सूत्रं क्षालयेद्विधिवत्पुनः ।
शुक्लं रक्तं तथा कृष्णं वश्यशान्त्यभिचारिके ।।५०।।

सूत्रं संपादयेद्विद्वान् पट्टसूत्रमथापि वा ।
स्थापयेत्पद्मरूपेणाश्वत्थनवपल्लवान् ।।५१।।

सूत्रं मणींश्च गन्धाम्भः क्षालितांस्तत्रनिःक्षिपेत् ।
तारं शक्तिं मातृकां च सूत्रे चैव मणिष्वथ ।।५२।।

विन्यस्य प्रयजेदाज्यैर्जुहुयाच्चैव शक्तितः ।
होमाशक्तौ होमसंख्याद्विगुणं जपमाचरेत् ।।५३।।

इति केचिद्वदन्त्यत्र वक्ष्यामो बाह्यपूजने ।
मणिमेकैकमादाय सूत्रे वै योजयेत्सुधीः ॥५४॥

मुखं मुखेषु संयोज्य पुच्छं पुच्छेतु योजयेत् ।
गोपुच्छसदृशी कार्या यद्वा सर्पाकृतिःशुभा ॥५५॥

तत्सजातीयमेकाक्षं मेरुत्वेनाग्रतोन्यसेत् ।
एकैकमणिमध्ये तु ब्रह्मग्रन्थिं प्रकल्पयेत् ॥५६॥

गायत्री जपने केचिन्मालां ग्रन्थन्ति मान्त्रिकाः ।
गायत्रीमन्त्रकथनं ब्रह्मग्रन्थिप्रकल्पने ॥५७॥

सामान्यतः कथं बाध्यमिति तेषामिहाशयः ।
जपमालां विधायेत्थं तस्यास्त्वतिशयार्थकान् ॥५८॥

कुर्युर्वाच्यविधानेन संस्कारान् क्रमबोधितान् ।
क्षालयेत्पञ्चगव्येन सद्योजातेन सज्जलैः ॥५९॥

चन्दनागुरुगन्धाद्यैर्वामदेवेन घर्षयेत् ।
धूपयेत्तामघोरेण तर्पयेत् पुरुषेण तु ॥६०॥

मन्त्रयेदीशमन्त्रेण प्रत्येकं च शतं शतम् ।
सुमेरुं पञ्चमेनैव ततो मन्त्रेण मन्त्रयेत् ॥६१॥

संस्कृत्यैवं बुधो मालां तत्प्राणांस्थापयेत्ततः ।
एवं कृताक्षमालायां जपेन्मातृकया सुधीः ॥६२॥

मातृकावर्णभेदेभ्यः सर्वे मन्त्राः प्रजज्ञिरे ।
अतः सकलमन्त्राणां जपः कार्योऽनयास्रजा ॥६३॥

गुरुं संपूज्य तस्मात्तां गृह्णीयात्सर्वसम्पदे ।
अशुचिर्न स्पृशेदेनां करभ्रष्टां न कारयेत् ॥६४॥

अङ्गुष्ठस्थामक्षमालां चालयेन्मध्यमाग्रतः ।
तर्जन्या न स्पृशेत्सोऽयं मुक्तिदो गणनक्रमः ॥६५॥

भुक्तौ मुक्तौ तथाऽऽकृष्टौ मध्यमायां जपेत्सुधीः ।
अङ्गुष्ठानामिकाभ्यां तु जपेदुत्तम कर्मणि ॥६६॥

जपान्यकाल इमां मालां पूजयित्वा तु गोपयेत् ।
गोपयेच्च निजं मन्त्रं गोपयेच्च निजं गुरुम् ॥६७॥

गोपयेदक्षमालां तु गोपयेन्निजमुद्रिकाम् ।
गुरुं प्रकाशयेद्विद्वान् मन्त्रं नैव प्रकाशयेत् ।।६८ ।।
अक्षमालां तु मुद्रां च गुरोरपि न दर्शयेत् ।
भूतराक्षसवेतालाः सिद्धगन्धर्वचारि (र)णाः ।।६९।।
हरन्ति प्रकटं यस्मात्तस्माद्गुप्तं जपेत्सुधीः ।
दृढं सूत्रं प्रयुञ्जीत न त्रुट्यति जपे यथा ।।७०।।
हस्तान्नच्यवते यद्वज्जपतः स्रक् तथाचरेत् ।
हस्ताच्च्युते भवेद्विघ्नं छिन्नायां मरणं ध्रुवम् ।।७१।।
जीर्णे सूत्रे पुनः सूत्रं ग्रथयित्वा शतं जपेत् ।
प्रमादात्पतिते हस्ताच्छतमष्टोत्तरं जपेत् ।।७२।।
तावन्निषिद्धसंस्पर्शे क्षालयित्वा यथोदितम् ।
शतादिजपसंख्यात्र मातृकाया विधीयते ।।७३।।
प्रक्रमात्तज्जपस्यैव सर्वत्रास्यैव बोधनात् ।
अपवादकबाधेन सिद्धवच्चन्द्रिकाकृतः ।
चन्द्रिकाया विवरणेष्विममर्थमुदाहरन् ।।७४।।

---

जपमालां निगद्येत्थं वक्ष्यामि जपलक्षणम् ।
जपः स्यादक्षरावृत्तिः स च त्रिविध ईरितः ।।१।।

वाचिकश्च उपांशुश्च मानसश्च त्रिधा स्मृतः ।
त्रयाणां जपयज्ञानां श्रेयान्स्यादुत्तरोत्तरः ।।२।।

यदुच्चनीचस्वरितैः स्पष्टशब्दवदक्षरैः ।
मन्त्रमुच्चारयेद्व्यक्तं वाचिकः स जपः स्मृतः ।।३।।

शनैरुच्चारयेन्मन्त्रमीषदोष्ठौ प्रचालयेत् ।
किंचिच्छ्रवणयोग्यः स्यादुपांशुः सजपः स्मृतः ।।४।।

धिया यदुच्चरेन्मन्त्रं स जपो मानसः स्मृतः ।
उच्चैर्जपोऽविशिष्टः स्यादुपांशुर्दशभिर्गुणैः ।।५।।

सहस्रो मानसः प्रोक्तः फलमेषां प्रचक्षते ।
वाचिको मारणे चैव पुष्टिकाम उपांशुकः ।।६।।

मानसः सिद्धिकामस्य प्रशस्तो जप ईरितः ।
गृहेजपः समःप्रोक्तो गोष्ठे दशगुणः स्मृतः ।।७।।

पुण्यारण्ये तथारामे सहस्रगुण ईरितः ।
अयुतं पर्वते पुण्ये नद्यां लक्षमुदीरितम् ।।८।।

कोटिं देवालये प्राहुरनन्तं शिवसन्निधौ ।
असंख्याताच्च संख्यातः सहस्रगुण उच्यते ।।९।।

संख्यातादपि साहस्र ऊर्ध्वपुण्ड्रावृतो जपः ।
देवतां हृद्गतां कृत्वा कृत्वा च हृदयं स्थिरम् ।।१०।।

शिवादींश्च गुरुं नत्वा जपेन्मन्त्रं समाहितः ।
शनैः शनैरविस्पष्टमद्रुतं न विलम्बितम् ।।११।।

न न्यूनं नाधिके वापि जपं कुर्याद्दिने दिने ।
नैरन्तर्यविधिः प्रोक्तो न दिनं व्यतिलङ्घयेत् ।।१२।।

दिवसातिक्रमात्तेषां सिद्धिरोधः प्रजायते ।
ब्रह्मचर्यपरः शान्तो विरतः परदूषणे ।।१३।।

वृथा कथासु सन्मौनी सकृदेव हविष्यभुक् ।
अनन्यमानसः प्रातःकालान्मध्यंदिनावधि ।।१४।।

क्रोधादिदोषरहितो जपेन्मन्त्रमनन्यधीः ।
जपस्तु सर्वकर्मभ्यः परमोधर्म उच्यते ।।१५।।

अहिंसया हि भूतानां जपयज्ञः प्रवर्त्तते ।
क्रुद्धो भ्रान्तस्त्वरायुक्तः शयानो वा निरासनः ।।१६।।

उपानद्गूढपादोवा रथ्यायामासवस्थले ।
उष्णीर्षी कञ्चुकी वापि मुक्तकेशो गलावृतः ।।१७।।

अपवित्रकरोऽशुद्धः प्रलपन्न जपेन्मनुम् ।
यानशय्यागतोवापि गच्छन्नुत्थित एव वा ।।१८।।

अप्रावृतौ करौ कृत्वा शिरसा प्रावृतोऽपि वा ।
चिन्ताव्याकुलचित्तो वा न मन्त्रं प्रजपेद्बुधः ।।१९।।

न वदन्नन्नजन्नान्यमाश्रयं कमपि स्मरन् ।
न क्षज्जृम्भणहिक्कादिविकलीकृतमानसः ।।२०।।

मन्त्रसिद्धिमवाप्नोति तस्माद्यत्नपरोभवेत् ।
शयनं दर्भशय्यायां विन्यसेच्छुचिरात्मनः ।।२१।।

तद्वासः क्षालयेन्नित्यमन्यथा विघ्नमावहेत् ।
उपर्यधोबहिर्वस्त्रविपर्यासं न कारयेत् ।।२२।।

विपर्यासविधानेन भवेदनियमः क्वचित् ।
पुरश्चरणकार्येच वर्जयेत्तं प्रयत्नतः ।।२३।।

अतिप्रयासजनकं वर्जयेत्कर्मसाधकः ।
प्रसार्य न जपेत्पादावुत्कटासन एव वा ।।२४।।

नैकवासाजपेन्मन्त्रं बहुवस्त्राकुलोऽपिवा ।
एवमादीनि चान्यानि जपकाले विवर्जयेत् ।।२५।।

पतितानामन्त्यजानां दर्शने भाषणेश्रुते ।
श्रुतेऽधोवायुगमने जृम्भणेजपमुत्सृजेत् ।।२६।।

उत्थायाचम्य तत्प्राप्तौ प्राणायामं षडङ्गकम् ।
कृत्वा सम्यग्जपेच्छेषं यद्वा सूर्यादिदर्शनम् ।।२७।।

मन्त्री मन्त्रजपं कुर्वन्न्शुचिं यदि पश्यति ।
प्राणायामं सकृत्कृत्वा जपशेषं समापयेत् ।
अष्टाक्षरविधावुक्तमिति श्रीनारदीयके ।।२८।।

---

अथ छिन्नादि दोषाणां शान्तये विधिरुच्यते ।
तथा छिन्नादयो दोषाः कथ्यन्ते सिद्धिबोधिनः ।।१।।

आदौ दोषस्य हेयत्वात्तस्य लक्षणमुच्यते ।
मनोर्यस्यादिमध्यान्तेष्वानिलं बीजमुच्यते ।।२।।

संयुक्तं वा वियुक्तं वा स्वराक्रान्तं त्रिधा पुनः ।
चतुर्धा पञ्चधावाथ समन्त्रश्छिन्नसंज्ञकः ।।३।।

आदिमध्यावसानेषु भूबीजद्वन्द्वलाञ्छितः ।
रुद्धमन्त्रः स विज्ञेयो भुक्तिमुक्तिविवर्जितः ।।४।।

मायात्रितत्त्वं वा बीजरावहीनस्तु यो मनुः ।
शक्तिहीनः स कथितो यस्य मध्येन विद्यते ।।५।।

कामबीजं मुखे माया शिरस्यङ्कुशमेव वा ।
असौ पराङमुखः प्रोक्तो हकारो बीज संयुतः ।।६।।

आद्यन्तमध्येष्विन्दुर्वा न भवेद्बधिरः स्मृतः ।
पञ्चवर्णो मनुर्यः स्याद्रेफार्केन्दुविवर्जितः ।।७।।

नेत्रहीनः स विज्ञेयो दुःखशोकामयप्रदः ।
आदिमध्यावसानेषु हंसः प्रासादवागुरौ ।।८।।

हकारो बिन्दुमान् जीवो वारं वापि चतुष्कलम् ।
माया नमामि च पदं नास्ति यस्मिन् स कीलितः ।।९।।

एकं मध्ये द्वयं मूर्ध्नि यस्मिन्नस्त्रपुरन्दरौ ।
न विद्येते स मन्त्रःस्यात् स्तम्भितः सिद्धिबो(रो)धकः।।१०।।

वह्निर्वायुसमायुक्तो यस्य मन्त्रस्य मूर्धनि ।
सप्तधा दृश्यते तं तु दग्धं मन्वीत मन्त्रवित् ।।११।।

अस्त्रं द्वाभ्यां त्रिभिः षड्भिरष्टाभिर्दृश्यतेक्षरैः ।
स्रस्तः सोऽभिहितो यस्य मुखेन प्रणवः स्थितः ।।१२।।

शिवो वा शक्तिरथवा भीताख्यः स प्रकीर्तितः ।
आदिमध्यावसानेषु भवेन्नार्णचतुष्टयम् ।।१३।।

यस्य मन्त्रः स मलिनो मन्त्रवित्तं विवर्जयेत् ।
यस्य मध्ये दकारो वा क्रोधो वा मूर्धनि द्विधा ।।१४।।

अस्त्रं तिष्ठति मन्त्रः स तिरस्कृत उदीरितः ।
भ्योद्वयं हृदये शीर्षे वषट्वौषट् च मध्यतः ।।१५।।

यस्यासौ भेदितो मन्त्रस्त्याज्यः सिद्धिषु सूरिभिः ।
त्रिवर्णो हंसहीनो यः सुषुप्तः स उदाहृतः ।।१६।।

मन्त्रोवाऽप्यथवा विद्या सप्ताधिकदशाक्षरः ।
फट्कार पञ्चकादिर्यो मदोन्मत्त उदाहृतः ।।१७।।

तद्वदस्त्रं स्थितं मध्ये यस्य मन्त्रः स मूर्छितः ।
विरामस्थानगं यस्य हृतवीर्यः स कथ्यते ।।१८।।

आदौ मध्ये तथा मूर्ध्नि चतुरस्त्रयुतो मनुः ।
ज्ञातव्यो हीन इत्येष यः स्यादष्टादशाक्षरः ।।१९।।

एकोनविंशत्यर्णो वा यो मन्त्रस्तारसंयुतः ।
हृल्लेखाङ्कुशबीजाढ्यस्तं प्रसुप्तं प्रचक्षते ।।२०।।

सप्तवर्णो मनुबलिः कुमारोऽष्टाक्षरस्तु यः ।
षोडशार्णो युवा प्रौढश्चत्वारिंशल्लिपिर्मनुः ।।२१।।

त्रिंशदर्णश्चतुः षष्टिवर्णो मन्त्रः शताक्षरः ।
चतुः शताक्षरश्चापि वृद्ध इत्यभिधीयते ।।२२।।

नवाक्षरो ध्रुवयुतो मनुर्निस्त्रिंश ईरितः ।
यस्यावसाने हृदयं शिरो मन्त्रौ च मध्यतः ।।२३।।

शिखा वर्म च संस्यातां वौषट् फट्कार एव वा ।
शिवशक्त्यर्णहीनो वा स निर्बीज इति स्मृतः ।।२४।।

एषु स्थानेषु फट्कारः षोढा यस्मिन् प्रदृश्यते ।
स मन्त्रः सिद्धिहीनः स्यान्मन्दः पंक्त्यक्षरो मनुः ।।२५।।

कूट एकाक्षरो मन्त्रः स एवोक्तो निरंशकः ।
द्विवर्णः शक्तिहीनः स्याच्चतुर्वर्णस्तु केकरः ।।२६।।

षडक्षरो बीजहीनस्त्वन्धःसप्ताक्षरो मनुः ।
सार्धद्वादशवर्णो वा धूमितः स तु निन्दितः ।।२७।।

सार्धबीजस्त्रयस्तद्वदेकविंशतिवर्णकः ।
विंशत्यर्णस्त्रिंशदर्णो यः स्यादालिङ्गितस्तु सः ।।२८।।

द्वात्रिंशदक्षरो मन्त्रो मोहितः परिकीर्तितः ।
चतुर्विंशतिवर्णो यः सप्तविंशतिवर्णकः ।।२९।।

(क्षुधार्तः स तु विज्ञेयश्चतुर्विंशति वर्णकः) ।
एकादशाक्षरो वापि पञ्च विंशतिसंख्यकः ।।३०।।

त्रयोविंशतिवर्णो वा मन्त्रो दृप्त उदाहृतः ।
षड्विंशत्यक्षरो षट्त्रिंशद्वर्णकस्तथा ।।३१।।

त्रिंशदेकोनवर्णोवाऽप्यङ्गहीनोऽभिधीयते ।
अष्टाविंशदक्षरो यः एकत्रिंशदथापि वा ।।३२।।

अतिक्रुद्धः स गदितो निन्दितः सर्वकर्मसु ।
(त्रिंशदक्षरको मन्त्रस्त्रयस्त्रिंशदथापि वा ।।३३।।
अतिक्रूरः स गदितो निन्दितः सर्वकर्मसु ।)
चत्वारिंशतमारभ्य त्रिषष्टिर्यावदापतेत् ।।३४।।
तावत्संख्या निगदिता मन्त्राः सव्रीडसंज्ञकाः ।
पञ्चषष्ट्यक्षरायेस्युर्मन्त्रास्ते शान्तमानसाः ।।३५।।
एकोनशतपर्यन्तं पञ्चषष्ट्यक्षरादितः ।
ये मन्त्रास्ते निगदिताः स्थानभ्रष्टाह्वयाबुधैः ।।३६।।
त्रयोदशाक्षरा ये स्युर्मन्त्राः पञ्चदशाक्षराः ।
विकलास्तेऽभिधीयन्ते शतं सार्धं शतस्तु (न्तु)वा ।।३७।।
शतद्वयं द्विनवतिरेकहीनाथवापि सा ।
शतत्रयं वा यत्संख्या निस्नेहास्ते समीरिता ।।३८।। '
चतुः शतान्यथारभ्य यावदर्णसहस्रकम् ।
अतिवृद्धः स यागेषु परित्याज्यः सदा बुधैः ।।३९।।

सहस्रादधिका मन्त्रा दण्डकाः पीडिता मताः ।
द्विसहस्राधिका मन्त्राः खण्डशः शतधा मताः ।।४०।।

ज्ञातव्याः स्तोत्ररूपास्ते मन्त्रास्ते स्युस्तथा मताः ।
तथा विद्याश्च बोद्धव्या मन्त्रिभिः सर्वकर्मसु ।।४१।।

बन्धेन योनिमुद्राया दोषान् छिन्नादिकान् हरेत् ।
तदावश्यकमेवात्र तद्व्यक्तं शारदादिके ।।४२।।

दोषानिमानविज्ञाय यो मन्त्रंभजते जनः ।
सिद्धिर्न जायते तस्य कल्पकोटिशतैरपि ।।४३।।

इत्यादिदोषदुष्टांस्तान्मन्त्रानात्मनि योजयेत् ।
शोधयेदूर्ध्वपवनो बद्धया योनिमुद्रया ।।४४।।

अथवा दोषशुद्ध्यर्थं प्रकारमिममाचरेत् ।
मन्त्रादिषु च सर्वेषु हृल्लेखा कामबीजकम् ।।४५।।

श्रीबीजं वा विनिःक्षिप्य जपेन्मन्त्रं विशुद्धये ।
तारसंपुटितो वाथ दुष्टमन्त्रोऽपि सिद्ध्यति ।।४६।।

अथ वक्ष्ये योनिमुद्राबन्धयोगमनुत्तमम् ।
जित्वादावात्मनः शत्रुन्कामादीन् योगमभ्यसेत् ।।४७।।

कामक्रोधौ लोभमोहौ तत्परं मदमत्सरम् ।
वदन्ति दुःखदानेतानरिषड्वर्गमात्मनः ।।४८।।

योगाष्टाङ्गैरिमान् जित्वा योगिनो योगमाप्नुयुः ।
यमनियमासनप्राणायामाः ततः परम् ।।४९।।

प्रत्याहारं धारणां च ध्यानं सार्धं समाधिना ।
अष्टाङ्गान्याहुरेतानि योगिनो योगसाधने ।।५०।।

अहिंसासत्यमस्तेयं ब्रह्मचर्यं कृपार्जवम् ।
क्षमा धृतिर्मिताहारः शौचं चेति यमा दश ।।५१।।

तपः सन्तोष आस्तिक्यं दानं देवस्य पूजनम् ।
सिद्धान्तश्रवणंचैव ह्रीर्मतिश्चजपोद्ग(व्र)तम् ।।५२।।

दशैते नियमाः प्रोक्ता योगशास्त्रविशारदैः ।
इन्द्रियाणां विचरतां विषयेषु निरर्गलम् ।।५३।।

बलादाहरणं तेभ्यः प्रत्याहारो वि(भि)धीयते ।
अङ्गुष्ठगुल्फजानूरुसीवनीलिङ्गनाभिषु ।।५४।।

हृद्ग्रीवाकण्ठदेशेषु लम्बिकायां ततो नसि ।
भ्रूमध्ये मस्तके मूर्ध्नि द्वादशान्ते यथाविधि ।।५५।।

धारणं प्राणमरुतो धारणेति निगद्यते ।
समाहितेन मनसा चैतन्यान्तरवर्तिना ।।५६।।

आत्मन्यभीष्टदेवस्य ध्यानं ध्यानमिहोच्यते ।
समत्वभावना नित्यं देवात्मपरमात्मनोः ।।५७।।

समाधिमाहुर्मुनयः प्रोक्तमष्टाङ्गलक्षणम् ।
युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु ।।५८।।

युक्तस्वप्नावबोधस्य योगोभवति दुःखहा ।
प्राणायामं समारभ्य विशुद्धान्तरनाडिकः ।।५९।।

आसने साधको दक्षपादपार्ष्णिं निवेशयेत् ।
गुदमार्गे तथा लिङ्गे वामपार्ष्णिम (थ)न्यसेत् ।।६०।।

निवर्तयेदिन्द्रियाणि विषयेभ्यः समाहितुः ।
ऋजुकायशिरोग्रीवः काकचञ्चुयुतक्रमात् ।।६१।।

समाहृत्यजगत्प्राणमुदरं परिपूरयेत् ।
अङ्गुष्ठाभ्यामथो कर्णौ तर्जनीभ्यां तु लोचने ।।६२।।

नासारन्ध्रे मध्यमाभ्यामवशिष्टाभिराननम् ।
अङ्गुलीभिर्नातिदृढमवरुध्य स्वकं मनः ।।६३।।

मूलाधारे स्थिरीकृत्य यथाश्वो गुदपद्धतिम् ।
संकोचयति संत्यज्य पुरीषन्तु पुनः पुनः ।।६४।।

तथा सङ्कोचयेदेनमङ्गलग्नकरस्ततः ।
भूयो भूयो हूंकृतेनोच्चारयेद्गुदमारुतम् ।।६५।।

उन्मीलयति सुषुम्ना सु(मु)खमभ्यस(स्य)तः क्रमात् ।
वायुस्तत्र प्रविश्याजग्रन्थि भित्वाजपङ्कजम् ।।६६।।

करोत्यूर्ध्वमुखंतस्मिन् प्रविष्टेऽन्तरथोध्वनिः ।
क्रमान्मेघनिनादाभो जायते तेन बुध्यते ।।६७।।

सुप्रसुप्ता कुण्डलिनो ततो योन्यन्तके स्मरम् ।
भ्रमन्तं विकसद्बन्धुजीवपुष्पाभमुज्ज्वलम् ।।६८।।

शिवस्वरूपं संचिन्त्य हंसरूपं विचिन्तयेत् ।
तयैकीकृतमात्मानं योगी कुण्डलिनीं ततः ।।६९।।

विधाय चित्कलायुक्तां हंसेन सहितां नयेत् ।
एतामूर्ध्वं चित्रनाड्या सहस्रदलपङ्कजम् ।।७०।।

चक्राणि षट् च लिङ्गानि त्रीणि भित्वा पृथक् पृथक् ।
गत्वा तत्कर्णिकासंस्थशिवसायुज्यमाप्नुयात् ।।७१।।

सहस्रारोर्ध्वसर्गाख्यस्थानस्थितसुधाकरात् ।
निपतंत्रीं(न्तीं)मन्त्रमयीं लोहितामृतविश्रु(स्रु) तिम्।।७२।।

पीत्वा तेनैव मार्गेण तास्ताः षट्चक्रदेवताः ।
प्रा (परा) वृत्य प्रीणयन्ती स्वस्थानमधिगच्छति ।।७३।।

इत्थं गतागतं योगी भूयो भूयः समाचरन् ।
मन्त्रजापविधानेन दोषान् छिन्नादिकान् हरेत् ।।७४।।

अभ्यसेद्योनुदिवसं योगमेनं समाहितुः ।
जित्वा दुरितरोगादीन् चिरंजीवेत्स्मरात्मकः ।।७५।।

साधयेत्सकलान्मन्त्रान्मौनी नीलशिरोरुहः ।
गुदध्वजान्तरे पद्मं ब्रह्मणो भूषितं दलैः ।।७६।।

चतुर्भिर्हेमसंकाशैर्वादिसान्तैर्विभूषितैः ।
सबिन्दुभिरियं प्राहुर्मूलाधारं तु योगिनः ।।७७।।

ध्वजमूले रसदलैर्बादिलान्तैः सबिन्दुभिः ।
वर्णैर्युतं शिवस्थानं स्वाधिष्ठानसमाह्वयम् ।।७८।।

नीलाञ्जनाभैर्दशभिर्युक्तैर्डाद्यैः सबिन्दुभिः ।
दशाक्षरैर्दलैर्युक्तं नाभिस्थं मणिपूरकम् ।।७९।।

हृदीन्द्रगोपसन्ध्याम्बुवाहसिन्दूरदीधिति ।
दलैरादित्यसंख्याभिः कादिवर्णैर्विभूषितैः ।।८०।।

सदन्तैः कमलं प्राहुरनाहतमिदं बुधाः ।
विशुद्धाख्यं तु नलिनं कण्ठेऽलिरुचिभिर्युतम् ।।८१।।

दलैः षोडशभिर्युक्तं स्वरैर्भगवतीगृहम् ।
शरच्चन्द्रमयूखाभमाज्ञानामसरोरुहम् ॥८२॥

भ्रूमध्ये द्विदलं सेन्दुवर्णान्त्यद्वयभूषितम् ।
षट्चक्रकमिदं प्रोक्तं योगशास्त्रविशारदैः ॥८३॥

ब्रह्मा शिवो गदापाणिर्हंसोभगवती तथा ।
बिन्दुः क्रमेण चक्रेशाः षडत्र परिकीर्तिताः ॥८४॥

ब्रह्माविष्णुस्तथारुद्र ईश्वरोऽथ सदाशिवः ।
बिन्दुः क्रमेण चक्रेशाः क्वचिदेवमुदीरिताः ॥८५॥

डाकिनी राकिनी चैव लाकिनी काकिनी तथा ।
शाकिनी हाकिनी चेति क्रमात् षट्चक्रदेवताः ॥८६॥

स्वयम्भुना स्वयं लिङ्गं योनिमध्यविलान्तरे ।
हृदिबाला(णा)द्वयं लिङ्गमितरञ्चा(च्चा)न्तरालके॥८७॥

सर्गाधो रक्तकिञ्जल्कसहस्रदलपङ्कजम् ।
निष्कलङ्कं स्फुरद्रश्मि त्रिशृङ्ग(ङ्गं) हिमरश्मिकम्॥८८॥

गुदध्वजान्तरे लिङ्गमुत्सेधाद्व्यङ्गुलं विदुः ।
तस्य द्विगुणविस्तारवृत्तरूपेण वेष्टितम् ॥८९॥

नाड्यस्तत्र समुत्पन्ना मुख्यास्तिस्रः प्रकीर्तिताः ।
इडा नाडी श्रिताभागं तनोर्वामं तु दक्षिणम् ॥९०॥

पिङ्गलाथ तनोर्मध्ये पृष्ठवंशसमाश्रिता ।
सुषुम्ना ब्रह्मरन्ध्रं तु चित्रा नाडी तदन्तरे ॥९१॥

पञ्चवर्णोज्ज्वला सूक्ष्मा देवैर्युक्ताथ पञ्चभिः ।
ब्रह्मा जनार्दनो रुद्रः शिवसादाख्यकावपि ॥९२॥

चित्राख्यनाड्यन्तरस्थाः पञ्चभूताधिदेवताः ।
कन्दमध्ये त्रिकोणास्ति योनिर्लोहितदीधितिः ॥९३॥

बालार्ककोटिकिरणशम्पेव चपलद्युतिः ।
कामः परिश्रमस्तत्र चिन्तनीयस्तडिन्निभः ॥९४॥

अतिसूक्ष्माभमूर्द्ध्वे स्याच्छक्तिर्दीपशिखाकृतिः ।
परिस्फुरन्ती तन्मध्ये शिवशक्तिस्वरूपिणी ॥९५॥

सूर्यकोटिप्रतीकाशा सर्वदेवमयी विभुः ।
प्रसुप्तभुजगाकारा शंखावर्तभ्रमान्मुखम् ।।९६।।

वेष्टयन्ती सुषुम्नाया ध्येया कुण्डलिनी शुभा ।
संक्षिप्य योनिमुद्राया बन्ध एवं प्रकीर्तितः ।।९७।।

---

कथ्यन्ते मन्त्रसंस्कारा शारदातिलका दश ।
जननं जीवनं पश्चात्ताडनं बोधनं तथा ।।१।।

अथाभिषेको विमलीकरणाप्यायने तथा ।
तर्पणं दीपनं गुप्तिर्दशैता मन्त्रसंस्क्रियाः ।।२।।

चन्दनादिभिरालिख्य पात्रे स्वर्णादिनिर्मिते ।
मन्त्रीसौवर्णलेखिन्या मातृकार्णान् यथाक्रमम् ।।३।।

ततोक्षराणि संगृह्य लिखेदभिमतं मनुम् ।
अवशिष्टैर्मातृकार्णैः संपुटीकृत्य तं जपेत् ।।४।।

एतज्जननमाख्यातं सम्प्रदायानुसारिभिः ।
प्रणवान्तरितान् कृत्वा मन्त्रवर्णान् जपेत्सुधीः ।।५।।

एतज्जीवनमित्याहुर्मन्त्रशास्त्रविशारदाः ।
मन्त्रवर्णान् समालिख्य ताडयेच्चन्दनाम्भसा ।।६।।

प्रत्येकं वायुना मन्त्री ताडनं तदुदाहृतम् ।
मन्त्रवर्णान् समालिख्य प्रसूनैः करवीरजैः ।।७।।

तन्मन्त्राक्षरसंख्यातैर्हन्यात्स्यात्तेन बोधनम् ।
अश्वत्थपल्लवैर्मन्त्रमभिषिञ्चेद्विशुद्धये ।।८।।

संचिन्त्यमनसा मन्त्रं मूले तेजस्त्रयात्मकम् ।
योनिबन्धोर्द्ध्वपवनस्तदुत्थज्योतिषा ततः ।।९।।

हृदम्भोजस्थिते वाच्यज्योतिर्मन्त्रेण निर्दहेत् ।
मन्त्रे मलत्रयं मन्त्री विमलीकरणं त्विदम् ।।१०।।

तारं व्योमाग्निमनुयुग्दन्तीज्योतिर्मनुर्मतः ।
कुशोदकेन जप्तेन प्रत्यर्णं प्रोक्षणं मनोः ।।११।।

तेन मन्त्रेण विधिवदेतदाप्यायनं मतम् ।
मन्त्रेण वारिणा तन्त्रे तर्पणं तर्पणं मतम् ।।१२।।
तारमायारमायोगो मनोर्दीपनमुच्यते ।
जप्यमानस्य मन्त्रस्य गोपनं त्वप्रकाशनम् ।।१३।।

इति मन्त्रस्य संस्कारा दशोक्ताः सिद्धिदायकाः ।
यान् कृत्वा विधिना मन्त्रो यथोक्तफलमश्नुते ।।१४।।

---

अथ शैवागमाद्युक्तास्त्रन्यासविधिरुच्यते ।
अभयं वामतो दद्याद् वरं दक्षे निवेशयेत् ॥१॥

देवस्य पृष्ठदेशे तु तूणं सम्यङ्‌ निवेशयेत् ।
शालिं च नवनीतं च दधिभाण्डं तथा गुडम् ॥२॥

अक्षमालां मृगं टङ्कं दक्षिणे विनिवेशयेत् ।
शुकं वीणां तथा नागं व्यञ्जनं च कमण्डलुम् ॥३॥

तर्जनीं वामतस्तद्वदासनं दक्षतो न्यसेत् ।
वेदं च पक्षिणं मुद्रां दक्षिणे विनियोजयेत् ॥४॥

शंखं चक्रं न्यसेत्तद्वत् कुशान् पद्मं द्वयोरपि ।
द्वयोः पाशं च पुस्तं च पात्रं वामे विचिन्तयेत् ॥५॥

कपालं वामतो दक्षे जपमालां समर्पयेत् ।
दक्षे शक्ति फलं खड्गं त्रिशूलं डमरुं तथा ॥६॥

वनमालां सुरापात्रं शृ (सृ) णिं चापि शरं न्यसेत् ।
धनुर्बाणं चोभयोर्हस्तकङ्कणं मुद्रिकां गदाम् ॥७॥

कशां तु वामतो न्यस्य खेटकं शृङ्खलं तथा ।
अर्घपात्रं चोभयोस्तु दद्यात्पुष्पाञ्जलिं तथा ॥८॥

भूषणान्युभयोर्दद्याद्वस्त्रं चित्रितमीरितम् ।
शुभ्रं वा सर्वदेवानां पीतं विष्णोः समीरितम् ॥९॥

शं च गोपीश पं गं च श प चं गं श गो प चं ।
श प चं गं ग प पं शं च शंखाद्याः षट् प्रदक्षिणाः ॥१०॥

के म सं दा राम प्रद्यु विभाऽनि पुर्वधोजनाः ।
गो त्रि श्री हृ नृसिंहाच्यु वा ना गो पे ह कृ क्रमात् ॥११॥

---

अथ जाप्यविधानं तु क्रमोक्तं प्रतिपद्यते ।
येन सिद्धिर्भवेदाशु अभाग्यस्यापि देहिनः ।।१।।

भूमेः परिग्रहं कुर्यात् परिमाणं च सर्ववित् ।
तथास्यामुकगोत्रस्य पुरश्चरणसिद्धये ।।२।।

मयेयं गृह्यते भूमिर्मन्त्रो मे सिध्यतामिति ।
विषमं मण्डलं वापि क्रोशं गव्यूतिमेव वा ।।३।।

नदी पर्वतवृक्षादौ परिमाणे नखान्ततम् ।
पुरश्चर्याभुवो मानं क्वचिन्मानं न विद्यते ।।४।।

तदाह चन्द्रिकाकारो नानामन्त्रानुसारतः ।
ग्रामे क्रोशमितं स्थानं क्रोशयुग्ममथापि वा ।।५।।

अहोरात्रिविहारार्थं तावतीं भूमिमाक्रमेत् ।
वितस्तिप्रमितान् कृत्वा प्रत्येकं वै कदापि वा ।।६।।

क्षीरवृक्षोद्भवान् कीलानस्त्रमन्त्राभिमन्त्रितान्
तेषु चास्त्रं समभ्यर्च्य मन्त्री पञ्चोपचारकैः ।।७।।

तानष्टौ सर्वदिग्भागे निखनेन्मध्य उद्धरेत् ।
क्षेत्रे तु कीलिते मन्त्री न विघ्नैः परिभूयते ।।८।।

अश्वत्थोदुम्बरप्लक्षन्यग्रोधाः क्षीरशाखिनः ।
क्षेत्रपालं स्ववर्गेण संपूज्य विधिवत्ततः ।।९।।

दिक्पतिभ्यो बलिं दद्यात् ततः क्षेत्रं समाश्रयेत् ।
जपस्थानं समाश्रित्य कूर्मचक्रं विचिन्तयेत् ।।१०।।

वर्तुलं नवकोष्ठं तत् कृत्वा कूर्माकृतिं लिखेत् ।
कादीन् वर्गान् लक्षमीशे मध्यकोष्ठे तथा लिखेत् ।।११।।

स्वराननुक्रमेणैव पूर्वाद्यष्टहरिद्गतान् ।
क्षेत्रनामाद्यवर्णं (र्णः) तु यस्मिन् कोष्ठे स्थितो भवेत् ।।१२।।

मुखं तत्तस्य जानीयात् हस्तावुभयतः स्थितौ ।
कोष्ठे कुक्षी उभे पाणौ द्वे शिष्टं पुच्छमीरितम् ।।१३।।

मुखस्थो लभते सिद्धिं करस्थः स्वल्पजीवनः ।
कुक्षिस्थितो ह्युदासीनः पार्श्वस्थोदुःखमाप्नुयात् ।।१४।।

पुच्छस्थः पीड्यते मन्त्री बन्धनोच्चाटनादिभिः ।
कूर्मचक्रमिदं प्रोक्तं मन्त्रिणां सिद्धिसाधनम् ।।१५।।

मुखं तस्य समाश्रित्य जपहोमादिकं चरेत् ।
ग्रामे वा विपिने वापि यत्रकुत्रावलोकयन् ।।१६।।

दीपस्थाने जपः कार्यः सर्वकाममभीप्सता ।
कूर्मचक्रमविज्ञाय यः कुर्याज्जपहोमकम् ।।१७।।

तस्य जाप्यफलं नास्ति सर्वानर्थाय कल्पते ।।
देहशुद्धिं विधायादावेकभुक्तं समाचरेत् ।।१८ ।।

प्रातः स्नात्वाथ गायत्रीं यथाशक्ति शुचिर्जपेत् ।
स्वर्णदानादिकं कुर्यादथवा सर्वकामदम् ।।१९।।

ज्ञाताज्ञातस्य पापस्य क्षयार्थं प्रथमं ततः ।
विप्रान् सन्तर्पयेत् सम्यक् भोजनाच्छादनादिभिः ।।२०।।

.......र्वस्त्रभूषाभिः संपूज्य गुरुमात्मनः ।
आरभेत जपं पश्चात् तदनुज्ञापुरस्सरम् ।।२१।।

पुरापि न विरुद्धं स्यादनुज्ञाग्रहणं गुरोः ।
असन्निधाने स्वगुरोर्मनसैव समाचरेत् ।।२२।।

अथवा गुरुसम्बद्धं गुरुं कञ्चन कल्पयेत् ।
एकभुक्तं प्रकुर्वीत हविष्यान्नेन तद्दिने ।।२३।।

अथ प्रातः समुत्थाय श्रीमान् ब्राह्ममुहूर्त्तके ।
कृतावश्यक्रियो धीरः उपविश्यासने शुभे ।।२४।।

सहस्रदलसंशोभिब्रह्मरन्ध्रस्थपङ्कजे ।
श्रीगुरुं परमात्मानं व्याख्यामुद्रालसत्करम् ।।२५।।

ध्यायेद्द्विनेत्रं द्विभुजं प्रीतं सकलसिद्धिदम् ।
एवं ध्यात्वा च तत्पादस्रुतपीयूषधारया ।।२६।।

स्थिरधीःक्षालितं देहं निजं संचिन्त्य देवताम् ।
स्वकीय हृदये ध्यात्वा देहं स्वं परिचिन्तयेत् ।।२७।।

तत्कान्तिपटलव्याप्तं नत्वा देवं तदाज्ञया ।
ऋष्यादीन् विन्यसेत्पश्चान् मन्त्रार्थं संस्मरन्बुधः ।।२८।।

गत्वा तीर्थं स्वशाखोत्थवर्त्मना स्नानमाचरेत् ।
पश्चात्स्वमन्त्रऋष्यादिन्यासपूर्वकमादरात् ।।२९।।

ध्यात्वेष्टदेवतां तीर्थमावाह्याङ्कुशमुद्रया ।
अमृतीकृत्य तत्तीर्थं मुद्रया धेनुसंज्ञया ।।३०।।

वमित्यमृतबीजेन रक्षयेत्तच्छरेण वै ।
तज्जले देवतामूर्तिं ध्यात्वा तच्चरणसृ(स्रु)ते ।।३१।।

तीर्थे निमज्य त्रिर्विद्वान्मनसा मन्त्रमुच्चरन् ।
कृत्वाघमर्षणं पश्चादुत्थायाचम्य वाससी ।
परिधाय ततो मन्त्री कुर्यात्सन्ध्यादिकां क्रियाम् ।।३२।।

यथाशाखं समाप्यैतदृष्यादिन्यासपूर्वकम् ।
जप्त्वा मूलमनुं त्वष्टाविंशति प्रमितं ततः ।।३३।।

मन्त्री वक्तव्यमार्गेण तावदेव प्रतर्पयेत् ।
अभिषिञ्चेत्त्रिशो मूर्ध्नि तद्वत्कलशमुद्रया ।।३४।।

तत्तद्देवस्य गायत्रीं प्रजपेत्पंक्ति संख्यया ।
कामान्ते त्रिपुरादेवि विद्महे पदमीरयेत् ।।३५।।

कामेश्वरि वदेत्पश्चात् धीमहीति वदेत्ततः ।
तन्न इत्यभिधायाथ वदेत् क्लिन्ने प्रचोदयात् ।।३६।।

त्रिपुराया इयं प्रोक्ता गायत्री सर्वसिद्धिदा ।
त्रैलोक्यमोहनायेति विद्महे पदमीरयेत् ।।३७।।

स्मराय धीमहि ततस्तन्नो विष्णुः प्रचोदयात् ।
गायत्री श्रीहरेः प्रोक्ता सकलार्थप्रदायिनी ।।३८।।

दाशरथाय विद्महे सीताकान्ताय धीमहि ।
तन्न इत्यभिधायान्ते वदेद्रामः प्रचोदयात् ।।३९।।

रामस्यैषा समुद्दिष्टा गायत्री सर्वसिद्धिदा ।
कामदेवाय विद्महे पुष्पबाणाय धीमहि ॥४०॥

इत्युच्चार्य वदेत्पश्चात्ततोऽनङ्गः प्रचोदयात् ।
कामदेवस्य गायत्री प्रोक्ता सकलसिद्धिदा ॥४१॥

तत्पुरुषाय विद्महे वामदेवाय धीमहि ।
अभिधाय पुनर्ब्रूयात् तन्नो रुद्रः प्रचोदयात् ॥४२॥

शङ्करस्य समाख्याता गायत्री सकलार्थदा ।
सुदर्शनाय विद्महे महाज्वालाय धीमहि ॥४३॥

अभिधाय बुधो ब्रूयात्तन्नश्चक्रः प्रचोदयात् ।
सुदर्शनस्य गायत्री प्रोक्ता सर्वसमृद्धिदा ॥४४॥

चण्डघण्टाय विद्महे चण्डेश्वरा (य) धीमहि ।
उक्त्वा तदन्ते प्रवदेत्तन्नश्चण्डः प्रचोदयात् ॥४५॥

इयं चण्डेश गायत्री सर्वसिद्धिकरी मता ।
षखोल्काय विद्महे दिवाकराय धीमहि ॥४६॥

ततः समुच्चरेद्धीमान् तन्नः सूर्यः प्रचोदयात् ।
सूर्यस्यैषा समुद्दिष्टा गायत्री सर्वसिद्धिदा ॥४७ ॥

यस्य मन्त्रस्य गायत्री कल्पे न परिदृश्यते ।
तन्मन्त्रदेवतानाम्ना गायत्रीं तत्र कल्पयेत् ॥४८॥

मन्त्रिणा मन्त्र गायत्री प्रोच्यतेऽत्र निदर्शनम् ।
ॐघृणि (:) सूर्यआदित्येत्यष्टार्णेन च भानवे ॥४९॥

अर्घं दत्त्वाथ मूलेन दशधा मन्त्रितैर्जलैः ।
आचम्य दिक्पतीन्नत्वा ततः संकल्पमाचरेत् ॥५०॥

सिद्धिकामोऽस्य मन्त्रस्य इयत्संख्यं जपं ततः ।
दशांशं हवनं होमाद्दशांशं तर्पणं ततः ॥५१॥

दशांशं मार्जनं तस्माद्दशांशं विप्रभोजनम् ।
पुरश्चरण मेवंहि करिष्ये प्रागुदङ्मुखः ॥५२॥

कुशाक्षतजलैरेवं करिष्ये प्रागुदङ्मुखः ।
कुशाक्षतजलैरेवं संकल्पः शास्त्रदर्शितः ॥५३॥

अन्येषां तु यथायोग्यं संकल्प्य वचनं मतम् ।
इतोऽन्यथा वदन्त्येके सम्प्रदायानुसारिण: ।।५४।।

दशांशता पुनस्तेषां जपस्यैव विशेषतः ।
न तु सन्निधि भावेनाप्युत्तरोत्तरशंसिता ।।५५।।

अश्वयुक्कृष्णपक्षे तु श्राद्धं कुर्याद् दिने दिने ।
त्रिभागहीनं पक्षं वा त्रिभागं त्वर्धमेव वा ।।५६।।

इत्यादौ सर्वशिष्टानां सम्मते तददर्शनात् ।
भोजनं ब्राह्मणानां तु न कर्मविनिवेशितम् ।।५७।।

सर्वक्रियाणामङ्गत्वादन्यथा च तदिष्यते ।
परन्तु मन्त्रदेवस्य जपस्यैव दशांशत: ।।५८।।

चिन्तनं मन्त्रिभि: कार्यं तदुक्तं मन्त्रिसत्तमैः ।
दशांशेनापि विद्याया देवतां चिन्तयेदपि ।।५९।।

पञ्चाङ्गता तु तेनैव पुरश्चरणकर्मणः ।
पादौ प्रक्षालयेद्गत्वा ततो मण्डपसंनिधिम् ।।६०।।

आचम्य विधिना कुर्यात्सामान्यर्घं तु तद्यथा ।
अस्त्रेण पात्रं संशोध्य हृन्मन्त्रेण प्रपूर्य च ।।६१।।

तीर्थमन्त्रेण चावाह्य तीर्थं सवितृमण्डलान् ।
तज्जले गन्धपुष्पाणि नि:क्षिपेत्तारमुच्चरन् ।।६२।।

अस्त्रेण शोधयित्वैतत् स्पृष्ट्वा मूलंजपेत्त्रिशः ।
दर्शयेत्तत्वमुद्रां च सामान्यार्घमिदं भवेत् ।।६३।।

तज्जलैरस्त्रमन्त्रेण द्वारमभ्युक्ष्य पूजयेत् ।
द्वारस्य दक्षिणे वामे गणेशं च सरस्वतीम् ।।६४।।

ऊर्ध्वोदुम्बरके मध्ये तयोर्द्वारश्रियं यजेत् ।
ततो दक्षिणशाखायां विघ्नं क्षेत्रेशमन्यतः ।।६५।।

तयोः पार्श्वगते गङ्गायमुने पुष्पवारिभिः ।
धातारं च विधातारं शंखपद्मनिधी तथा ।।६६।।

देहल्यामर्चयेदस्त्रं प्रतिद्वारमिति क्रमात् ।
ततस्तद्देवतायास्तु तत्तद्वाराधिपान् यजेत् ।।६७।।

विष्णोर्द्वाराधिपानन्दसुनन्दचण्डसंज्ञकाः ।
प्रचण्डोऽथबलश्चैव प्रबलो भद्र इत्यपि ॥६८॥

सुभद्रश्चैव संप्रोक्तः शैवा द्वाराधिपाः पुनः ।
नन्दिसंज्ञो महाकालो गणेशो वृषभस्तथा ॥८६॥

भृङ्गी रिटिस्तथा स्कन्द उमा चण्डेश्वरस्त्वमी ।
वक्रतुण्डश्चैकदंष्ट्रो महोदरगजाननौ ॥७०॥

लम्बोदरोऽथ विकटो विघ्नराजाह्वयोऽपरः ।
धूम्रवर्णस्त्विमे विघ्नाःशाक्तेयाः मातरः स्मृताः ॥७१॥

ब्राह्मी माहेश्वरी भूयः कौमारी वैष्णवी तथा ।
वाराह्यनन्तरेन्द्राणी चामुण्डा सप्तमी तथा ॥७२॥

अष्टमी स्यान्महालक्ष्मीः प्रोक्ता विश्वस्य मातरः ।
इन्द्रो यमोऽथ वरुणः कुबेरस्त्रैपुरा मताः ॥७३॥

द्वारं यद्येकमेवस्यात्तदा साधारणो विधिः ।
सकृत्स्याद्द्वारपालांश्च सर्वांस्तत्रैव पूजयेत् ॥७४॥

द्वारपूजां विधायेत्थं मूलमन्त्रं जपन् धिया ।
दिव्यान्तरिक्षभौमांस्तु सर्वविघ्नान्निवारयेत् ॥७५॥

शिवाज्ञया इतोऽन्यत्र व्रजन्तु सर्व एव हि ।
पार्ष्णिधातत्रयं कृत्वा स्वाङ्गं संकोचयन् सुधीः ॥७६॥

वामशाखां स्पृशन्नन्तः प्रविशेद्दक्षिणाङ्घ्रिणा ।
द्वारापेक्षं तु वामत्वमित्येतन्नानु मन्यते ॥७७॥

पुरुषापेक्षया तस्मिन् बाधकानामभावतः ।
दक्षांशेन स्पृशेदेतद्व्याख्यानमपि मन्त्रिणाम् ॥७८॥

[अज्ञानगहनध्वान्तसङ्गतन्नैव युज्यते] ।
तूर्णयागे तु संप्रोक्तं पार्ष्णिघातपुरःसरम् ।
सिद्धार्थाक्षतसंयुक्तं नाराचास्त्रधिया बुधः ॥७९॥

अपसर्पन्तु ते भूता ये भूता ह्यत्रसंस्थिताः ।
विघ्नकर्तारो ये भूतास्ते नश्यन्तु शिवाज्ञया ॥८०॥

इत्यन्तेऽस्त्रं समुच्चार्य मण्डपान्तः परिक्षिपेत् ।
नैर्ऋत्यां दिशि वास्त्वीशं ब्राह्मणं च समर्चयेत् ॥८१॥

पञ्चगव्यार्घतोयाभ्यां प्रोक्षयेद्यागमण्डपम् ।
अथवा ये भवन्त्यत्र सालसा मितबुद्धयः ।।८२।।

द्वारपूजावसानं ते विदध्युर्न्नैव मानवाः ।
एवं विधाय विधिना जपस्थाने समाचरेत् ।
पूजादिकं जपस्याङ्गं तत्कृत्वा जपमाचरेत् ।।८३।।

परिष्कृत्य स्थलं रम्यं गोमयेनोपलेपितम् ।
उपचारान् प्रकुर्वीत तानाहुस्त्रिविधान् बुधाः ।।८४।।

आसनं स्वागतं चार्घं पाद्यमाचमनीयकम् ।
मधुपर्काचमनस्नानवसनाभरणानि च ।।८५।।

सुगन्धसुमनोधूपदीपनैवेद्यवन्दनम् ।
प्रयोजयेदर्चनायामुपचारांश्च षोडश ।।८६।।

अर्घपाद्याचमनमधुपर्काचमान्यथ ।
सुगन्धसुमनोधूपदीपनैवेद्यवन्दनम् ।।८७।।

प्रयोजयेदर्चनायामुपचारान् दश क्रमात् ।
गन्धादयो निवेद्यान्ता पूजा पञ्चोपचारिकी ।।८८।।

पूर्वोक्तमासनं मन्त्री वेदिकायां प्रविन्यसेत् ।
प्रक्षाल्यपाणिचरणौ सुपवित्रकरः शुचिः ।।८९।।

आगत्य वेदिकास्थानं पूजाङ्गं विधिवच्चरेत् ।
तीक्ष्णदंष्ट्र महाकाय कल्पान्तदहनोपम ।।९०।।

भैरवाय नमस्तुभ्यमनुज्ञां दातुमर्हसि ।
इत्यनुज्ञां गृहीत्वास्य स्थानशोधनमाचरेत् ।।९१।।

वीक्षणादिचतुष्केण सम्प्रोक्ष्यासनमादरात् ।
आधारशक्तिमारभ्य पृथिव्यन्ताः प्रपूजयेत् ।।९२।।

देवतास्तत्र मन्त्रज्ञो गन्धपुष्पाक्षतैर्जलैः ।
मेरुपृष्ठ ऋषिश्छन्दः पृथिव्याः सुतलं मतम् ।।९३ ।।

देवता कूर्म आख्यातः संस्मरेदृषिपूर्वकान् ।
विनियोगोऽस्य मन्त्रस्य आसने परिकीर्तितः ।।९४।।

पृथ्वित्वया धृता लोका देवित्वं विष्णुना धृता ।
त्वं च धारय मां भद्रे पवित्रीकुरु चासनम् ।।९५।।

इति मन्त्रंजपन् पीठे प्राङमुखोवाऽप्युदङमुखः ।
स्वस्तिकादिक्रमेणैव ऋजुकायो विशेद्बुधः ॥९६॥

गुरोः शिवस्य सूर्यस्य यथा विभवतो बुधः ।
दीपस्य ज्वलितस्यापि संनिधानं प्रकल्पयेत् ॥९७॥

पीठाग्न्येयादिकोणेषु पूर्णकुम्भचतुष्टयम् ।
संप्राप्य पूजयेंत्तेषु गणेशं च सरस्वतीम् ॥९८॥

दुर्गां क्षेत्राधिपं चापि विधिवत्साधकोत्तमः ।
कुम्भानां स्थापनं चैतत् पुरश्चर्यापरं मतम् ॥९९॥

स्थापयेद्दक्षिणे भागे पूजाद्रव्याणि साधकः ।
सुवासिताम्बुसम्पूर्णं सव्ये कुम्भं सुशोभनम् ॥१००॥

प्रक्षालनाय करयोः पश्चात् पात्रं निवेशयेत् ।
घृतप्रज्वलितान्दीपान् स्थापयेत्परितः शुभान् ॥१०१॥

दर्पणादिकमन्यद्यत् विधिवत्तत् प्रकल्पयेत् ।
कृताञ्जलिपुटो भूत्वा वामदक्षिणपार्श्वयोः ॥१०२॥

नमेद्गुरुं गणेशानं पुरतः स्वेष्टदेवताम् ।
यद्वा वामे गुरुं दक्षे गणेशं पुरतोऽम्बिकाम् ॥१०३॥

पश्चिमे क्षेत्रपालं च नमस्कुर्याद्विधानवित् ।
सुदर्शनस्य मन्त्रेण रक्षां कुर्यात् समन्ततः ॥१०४॥

ओं सहस्रारवमस्त्रं सुदर्शनमनुर्मतः ।
सुगन्धिपुष्पमद्दे (र्द्दे)न सुरभीकृत्य हस्तकौ ॥१०५॥

क्षिपेदुत्तरतः पुष्पं मन्त्री नाराचमुद्रया ।
अस्त्रमन्त्रेण संशोध्य कुर्यात्तालत्रयं ततः ॥१०६॥

कृत्वोद्ध्र्वोद्ध्वं च तेनैव दिग्बन्धनमथाचरेत् ।
ज्योतिर्ज्ञानसमुद्भूतं सत्यज्ञानसुखात्मकम् ॥१०७॥

आत्मनः परितो वह्निप्राकारं त्राणनाय च ।
भूतप्रेतपिशाचेभ्यो विधाय तदनन्तरम् ॥१०८॥

अद्भिः पुष्पाक्षतैश्चैव वह्निबीजास्त्रमन्त्रितैः ।
प्रक्षिपेत्परितो वह्निविगमायाथ साधकः ॥१०९॥

भूतशुद्धिं प्रकुर्वीत तत्प्रकारान् ब्रवीम्यहम् ।
पादतो जानुपर्यन्तं चतुरस्रं सवज्रकम् ।।११०।।

लं संयुतं पीतवर्णं भूमिस्थानं विचिन्तयेत् ।
जान्वोरानाभि चन्द्रार्धनिभं पद्मेन लाञ्छितम् ।।१११।।

शुक्लवर्णं स्वबीजेन युतं ध्यायेदथो जलम् ।
नाभितः कण्ठपर्यन्तं त्रिकोणं रक्तवर्णकम् ।।११२।।

सस्वस्तिकं स्वबीजेन युतं वह्नेस्तु मण्डलम् ।
कण्ठाद्भ्रूमध्यपर्यन्तं कृष्णं वायोस्तु मण्डलम् ।।११३।।

षट्कोणं बिन्दुभिः षड्भिर्युक्तं बीजेन चिन्तयेत् ।
भ्रूमध्याद्ब्रह्मरन्ध्रान्तं वर्तुलं ध्वजलाञ्छितम् ।।११४।।

धूम्रवर्णं स्वबीजेन युक्तं ध्यायेन्नभः स्थलम् ।
एवं ध्यात्वा पुनस्तानि भूतानि प्रविलापयेत् ।।११५।।

पृथ्वीमप्सु च ता वह्नौ वह्निं वायौ समीरणम् ।
प्रविलाप्य तथाकाशे आकाशं प्रकृतौ पुनः ।।११६।।

अपरब्रह्मरूपां तां मायाशक्तिं परात्मनि ।
प्रविलाप्य परब्रह्मरूपस्तिष्ठेत् कियत्क्षणम् ।।११७।।

पुनरुत्पादयेद्देहं पवित्रं परमात्मनः ।
शब्दब्रह्मात्मिका या सा मातृका प्रकृतिःपरा ।।११८।।

अजायत जगन्मातुराकाशं नभसोऽनिलः ।
समीरणादभूदग्निर्वह्नेरापस्ततो मही ।।११९।।

स्वीयमेभ्योऽपि भूतेभ्यस्तेजोरूपं कलेवरम् ।
देवताराधनेनैवमुत्पन्नमिति चिन्तयेत ।।१२०।।

तस्मिन् देहे परात्मानं सर्वज्ञं सर्वशक्तिमत् ।
समस्तदेवतारूपं सर्वदेवमयं विभुम् ।।१२१।।

आत्मरूपेण देहे स्वे बीजभावेन तिष्ठति ।
इत्येषा भावना मुख्या भूतशुद्धिरुदीरिता ।।१२२।।

[पूर्णमच्छिद्रमव्यक्तं तेजस्तत्प्रणवात्मकम् ।
सर्वमन्त्रनिदानं तु गुणत्रयविवर्जितम् ।।१२३।।

आधारहृदयाच्चैव भ्रूमध्यान्मन्त्रिसत्तमैः ।
द्वादशान्तपदे नीत्वा स्थाणुवद्भावयेद्वपुः ।।१२४।।

नाभिस्थानवायुना मन्त्री सपापंशोधयेत्ततः ।
वह्निना हृदयस्थेन दहेच्छुष्कं कलेवरम् ।।१२५।।

सहस्रारे महापद्मे ललाटे च स्थितं विधुम् ।
संपूर्णमण्डलं शुभ्रं चिन्तयेदमृतात्मकम् ।।१२६।।

तस्माद्गलितधाराभिः प्लावयेद्रसमसाद्वपुः ।
अपिवर्णमयैश्चैव पञ्चभूतात्मकं वपुः ।।१२७।।

पूर्ववद्भावयेद्देवि श्रुतं विज्ञानमन्त्रितम् ।
मण्डलानि च भूतानां देहे स्वे परिचिन्तयेत् ।।१२८।।

पूर्ववन्मोहने वोक्तमेवं भूतविशोधनम् ।]
अथवान्यप्रकारेण भूतशुद्धिर्विधीयते ।।१२९।।

आनन्दकन्दसंभूतं ज्ञाननालं सुशोभनम् ।
ऐश्वर्याष्टदलं चैव परं वैराग्यकर्णिकम् ।।१३०।।

स्वीयहृत्कमलं ध्यायेत्प्रणवेन प्रकाशितम् ।
कृत्वा तत्कर्णिकासंस्थं प्रदीपकलिकानिभम् ।।१३१।।

सुषुम्नावर्त्मनात्मानं परमात्मनि योजयेत् ।
योगयुक्तेन विधिना सोऽहंमन्त्रेण साधकः ।।१३२।।

आकशवायुतेजांसि जलपृथ्वीनभांसि च ।
त्वक्चक्षूरसनघ्राणमुखपाणिपुरःसरम् ।।१३३।।

पादं पायुं तथोपस्थं शब्दस्पर्शौ यथायथम् ।
रूपं रसं च गन्धं च वागादाने गतिं तथा ।।१३४।।

विसर्गं च तथानन्दं तथान्येतानि संयुतम् ।
व्युत्क्रमाद्बीजभावेन तत्र लीनानि चिन्तयेत् ।।१३५।।

वामनासापुटे वायोर्बीजं यमिति चिन्तयेत् ।
धूम्रं कन्दगतैर्वातैरेकीभूतं नभस्वतम् ।।१३६।।

मण्डलस्थं पूरकाख्ये कुम्भकेतु विचिन्तयेत् ।
शुष्कं शरीरं स्थिरधीर्दक्षिणेन तु रेचयेत् ।।१३७।।

ततो दक्षपुटे वह्नेर्बीजं रमिति चिन्तयेत् ।
रक्तं विलीनपवनं वह्निमण्डलसंस्थितम् ।।१३८।।

हृदिस्थवह्निना मन्त्री सम्भाव्यैकं तनुं ततः ।
ध्यायेदनलसम्पूर्णां कुम्भके रेचके च ताम् ।।१३९।।

दग्धां विचिन्तयेद्योगी भस्मना सह रेचयेत् ।
वामनासापुटे चैवं निश्चलाङ्गो जितेन्द्रियः ।।१४०।।

ततो वामपुटे सोमबीजं ठमिति चिन्तयेत् ।
श्वेतं पाथोमण्डलस्थममृतेनैकतां गतम् ।।१४१।।

सम्भाव्यपूरके बीजं नीत्वा भालसुधारुचिम् ।
पीयूषबीजं प्रजप-[न्नथ किन्नहि रूप्यते ।।१४२।।

तदेव पूरकं बीजं ध्याने किञ्च नियामकम् ।
किञ्चात्रमन्त्रजापेषु ध्यानमेव नियामकम् ।।१४३।।

वर्णानां यादिसंज्ञानां जप्यत्वं कथमन्यथा ।
अत्रोच्यते शारदादिनिबन्ध स्वरसो यतः ।।१४४।।

ध्यानमात्रमतस्तस्य स्वधाबीजं जपं मतम् ।
विशेषविधिमुत्सृज्य तदुक्तं शारदादिके ।।१४५।।

ततो वमिति बीजेन प्लावयेत्सकलां तनुम् ।
पक्षयोरनयोर्धीर विकल्पः किं न कल्प्यते ।।१४५।।

न भवत्येकवाक्यत्वं यत्र यत्र विकल्प्यते ।
दीपिकादौ स्फुटं चैतत्] कुम्भके वर्णमिश्रिताम् ।।१४७।।

चन्द्रान्निपातयेद् वृष्टिममृतस्य पुनः पुनः ।
शरीरदोषजातानि विश्लेषं कारयेत्तनुम् ।।१४८।।

दिव्यामुत्पाद्याचरणमामस्तकमुदारधीः ।
अमृतेन परिप्लाव्य वायुं दक्षेण रेचयेत् ।।१४९।।

कनिष्ठानामिकाङ्गुष्ठैर्यन्नासापुटधारणम् ।
प्राणायामः स विज्ञेयस्तर्जनीमध्यमे विना ।।१५०।।

अंशत्रयात्मकः प्रोक्तः पूरकुम्भकरेचकैः ।
बाह्यादापूरणं वायोरुदरे पूरको मतः ।।१५१।।

संपूर्णकुम्भवद्वायोर्धारणं कुम्भको मतः ।
बहिर्यद्रेचनं वायोरुदरा (द्रे)चकोपि सः ।।१५२।।

प्राणायाममिमं द्वेधा प्राहुर्योग विशारदाः ।
सगर्भं तद्विगर्भं च तद्द्वयं कथ्यते यथा ।।१५३।।

जपध्यानादिभिर्युक्तं सगर्भं तं वदन्त्यमी ।
तदपेतं च विगर्भं च योगशास्त्रविशारदाः ।।१५४।।

सगर्भे जपसंख्यानमीरितं दीपिकादिषु ।
आद्ये षोडशधाजप्यात् कुम्भके तच्चतुर्गुणम् ।।१५५।।

तदधर्मवसाने तु विगर्भं मात्रयेरितम् ।
कालेन यावता स्वीयो हस्तः स्वं जानुमण्डलम् ।।१५६।।

पर्येति मात्रा सा तुल्या स्वयैकश्वासमात्रया ।
भूयो भूयः क्रमात्तस्य व्यत्यासेन समाचरेत् ।।१५७।।

येनैव संत्यजेत्तेन पूरयेद्धारयेत्ततः ।
रेचयेच्च ततोऽन्येन शनैरेवं पुनः पुनः ।।१५८।।

यथा सिंहो गजो व्याघ्रो भवेद्धार्यः शनैः शनैः ।
तथैव चलितो वायुरन्यथा हन्ति साधकम् ।।१५९।।

प्राणायामेन युक्तेन सर्वरोगक्षयो भवेत् ।
अयुक्ताभ्यासयोगेन सर्वरोगसमुद्भवः ।।१६०।।

हिक्का श्वासश्च कासश्च शिरः कर्णाक्षिवेदनाः ।
भवन्ति विविधा रोगाः प्राणायाम व्यतिक्रमात् ।।१६१।।

अतः शास्त्रोक्त मार्गेण प्राणायामं समभ्यसेत् ।
ततो लीनानि तत्त्वानि स्वस्वस्थानं समानयेत् ।।१६२।।

हंसेन जीवं परमात्मनः स्वस्थानमानयेत् ।
केचिदत्रान्यथा प्राहुर्न स्वदेहं विशोधयेत् ।।१६३।।

ततः पुरुषनिभं पापमनादिभवसंचितम् ।
ब्रह्महत्याशिरस्कं च स्वर्णस्तेयभुजद्वयम् ।।१६४।।

सुरापान हृदा युक्तं गुरुतल्पकटिद्वयम् ।
तत्संयोगिपदद्वन्द्वमङ्गप्रत्यङ्गपातकम् ।।१६५।।

उपपातकरोमाणं रक्तश्मश्रुविलोचनम् ।
खड्गचर्मधरं कृष्णं कुक्षौ दक्षिणतः स्मरेत् ।।१६६।।

ततः संशोधयेदेनं पूरकादिक्रमेण वै ।
भूतशुद्धिरियं प्रोक्ता योगशास्त्रविशारदैः । १६७।।

अथवान्य प्रकारेण भूतशुद्धिर्विधीयते ।
सुषम्नावर्त्मना जीवं पुष्करस्थे सदाशिवे । १६८।।

संयोज्य हंसमन्त्रेण वह्निबीजेन भस्मसात् ।
विदधीत धिया गात्रं सर्वं तद्भस्म वायुना ।।१६९।।

अपनयन् वायुबीजेन अखिलं भुवनं बुधः ।
संप्लावयन् बलभिदा स्वमात्मानं विचिन्तयेत् ।।१७०।।

जलेति बुद्बुदाकारं दृढं योगविशारदः ।
ततो बुद्बुदमध्यस्थं प्रस्फुरत्कान्तिमण्डलम् ।।१७१।।

अण्डमाजं बुधो ध्यायेत्तदन्तर्भुवनान्यपि ।
विचिन्त्य भूतलं रम्यं तदन्तश्चिन्तयेद्बुधः ।।१७२।।

शोभितं स्मितपुष्पेण हृद्यगन्धेन चोत्कटम् ।
समन्ततो यतमनाश्चिन्तयेन्नीपकाननम् ।।१७३।।

तदन्तर्मण्डितं रत्नैः सौवर्णं मण्डपं बुधः ।
मार्त्तण्डमण्डलरुचिं चतुर्द्वारसुशोभनम् ।।१७४।।

तोरणैर्मणिसम्भिन्नैश्चतुर्भिः परिशोभितम् ।
उद्यदिन्दुद्युतिसितं वितानवरलाञ्छितम् ।।१७५।।

द्वारि द्वारि स्थितौ यस्य माल्याम्बरविभूषितौ ।
अन्वितौ परिवारेण क्षेत्रेश्वर गणेश्वरौ ।।१७६।।

द्वारपालिस्थ देवस्य स्वस्वद्वारि विचिन्तयेत् ।
ततोऽन्तरमरस्त्रीणां गणान् ध्यायेदनाकुलः ।।१७७।।

सङ्गीतादिरतान्मन्त्री गन्धर्वप्रमुखानपि ।
मध्ये सिंहासने तस्य पद्ममष्टदलं बुधः ।।१७८।।

उद्यदादित्यसंकाशं ध्यायेदरुणकेसरम् ।
कर्णिकायां स्वासनस्थां चिन्तयित्वेष्टदेवताम् ।।१७९।।

आत्मनैकतया ध्यायेद्योगशास्त्रविशारदः ।
अन्यत्राप्येवमेवस्याद्यद्रूपां स्वेष्टदेवताम् ।।१८०।।

योगयुक्तेन मनसा तदभेदं विचिन्तयेत् ।
हृदम्भोजं पुनर्जीवं साधको हंसरूपिणम् ।।१८१।।

आनयेत् पुष्करामभोजनिविष्टपरमात्मनः ।
भूतशुद्धिरियं प्रोक्ता तत्त्वज्ञैर्मान्त्रिकोत्तमैः ।।१८२।।

एषामन्यतमं पक्षमाश्रित्य परिशोधयेत् ।
एवं वपुः साधकवरो देवताराधनोद्यतः ।।१८३।।

भूतशुद्धिरियं कार्या पूजादौ सर्वथा बुधैः ।
भूतशुद्धिं बिना कर्तुर्जपहोमार्चनक्रियाः ।।१८४।।

भवन्ति निष्फलाः सर्वाः प्रकारेणाप्यनुष्ठिताः ।
प्राणप्रतिष्ठया पश्चाज्जीवं देहे निधापयेत् ।।८५।।

इति ज्ञानार्णवप्रोक्तवचनादात्मनोऽप्यसून् ।
स्थापयेदुक्तमन्त्रेण यथावदिति मान्त्रिकाः ।।१८६।।

---

अथो वक्ष्यामि विन्यासं मात्रिकाया यथाविधि ।
जपाद्यं सर्वमन्त्राणां विन्यासेन विना लिपेः ।।१।।

कृतं तन्निष्फलं विद्यात्तस्मात्पूर्वं लिपिं न्यसेत् ।
न्यासं विना जपं प्राहुः निष्फलं सकलासुरम् ।।२।।

ऋषिर्ब्रह्मा समुद्दिष्टो गायत्री छन्द ईरितम् ।
सरस्वती समाख्याता देवता देशिकोत्तमैः ।।३।।

अक्लीबह्रस्वदीर्घान्तर्गतैः षड्वर्गकैः क्रमात् ।
षडङ्गानि विधेयानि जातियुक्तानि देशिकैः ।।४।।

ललाटमुखवृत्ताक्षिश्रुतिघ्राणेषु दन्तयोः ।
ओष्ठदन्तोत्तमाङ्गास्ये दोःपत्संध्यग्रकेषु च ।।५।।

पार्श्वयोः पृष्ठतो नाभौ जठरे हृदयेंऽसके ।
ककुद्यंसे च हृत्पूर्वं पाणिपादयुगे ततः ।।६।।

जठराननयोर्न्यस्येन्मातृकार्णान् यथाक्रमम् ।
यादिवर्णेषु सर्वेषु हृत्पूर्वत्वसमन्वयः ।।७।।

एतज्ज्ञानार्णवः प्राह मालामन्त्रे स्फुटक्रमात् ।
दीपिकायां मात्रिकाया विन्यासेऽपीति केचन ।।८।।

[चतुर्णामेव तत्रापि हृत्पूर्वत्वसमन्वयः ।
नैतत्समासाक्रान्तत्वात्पृथगन्वयवैशसात्] ।।९।।

न्यसेत्सर्गान्वितां सृष्ट्या ध्यात्वा देवीं यथाविधि ।
सर्गबिन्द्वन्तिकां न्यसेत् टार्णाद्यां स्थितिवर्त्मना ।।१०।।

विद्यात्पूर्वोदितान्मन्त्री ऋष्यादीनङ्गसंयुतान् ।
सर्वंकर्तुमशक्तश्चेत् सृष्टिमात्रं लिपिं न्यसेत् ।।११।।

देवभावार्पकावेतौ पूजनादिषु मन्त्रिणाम् ।
आवश्यकौ ततो ज्ञेयो पूजनादिषु मन्त्रिभिः ॥१२॥

इत्यच्युतोक्ततनुरित्यादि क्रमदीपिका--
वाक्येन देवताभाव कारिता गम्यते तयोः ॥१३॥

देवो भूत्वा यजेद्देवं नादेवो देवमर्चयेत् ।
इत्यादि श्रुतिवाक्येन नित्यत्वमवगम्यते ॥१४॥

जपाद्यं सर्वमन्त्राणामित्यादिवचनादपि ।
प्रत्येकादुभयोरावश्यकत्वमिति गम्यते ॥१५॥

नित्यत्वमेव चैकस्य विन्यासश्चेति कश्चन ।
तदसत्फलबाधेन चतुर्णामपि कीर्तनात् ॥१६॥

यथानुकल्पसंप्राप्तेरनित्यत्वमिहेष्यते ।
स्नानसंध्यादिकेष्वेवमनित्यत्वं भविष्यति ॥१७॥

बहुना किमिहोक्तेन पूजानावश्यकी भवेत् ।
फलमस्तीति चेद्वाच्यं तत्त्वन्यासेऽपि का गतिः ॥१८॥

ततः कल्पस्थितान्मन्त्री न्यासानन्यान् समाचरेत् ।
यथाहि वैष्णवीतन्त्रे तत्त्वन्यासं विदुर्बुधाः ॥१९॥

प्राणायामं ततः कुर्यान्मन्त्री जितजितेन्द्रियः ।
तेनैव मनुवर्येण यं मन्त्रं जप्तुमिच्छति ॥२०॥

अथवा साधकः कुर्यात्प्रणवेनासुसंयमम् ।
स्त्रीभिः शूद्रैश्च कर्तव्यो लौकिकेनासुसंयमः ॥२१॥

न वैदिकं पठेच्छूद्रः स्त्रियश्चैव कदाचन ।
तत्र शक्तस्य पूर्वोक्ता संख्याऽशक्तस्य चान्यथा ॥२२॥

युक्तं युक्तं पिबद्वायुं युक्तं युक्तं च धारयेत् ।
युक्तं युक्तं त्यजेदेनमेवं सिद्धिमवाप्नुयात् ॥२३॥

इत्यनेन यथाशक्ति जपसंख्यानमीरितम् ।
परन्तु यावता पूरः कुम्भकस्तच्चतुर्गुणः ॥२४॥

पूरकद्विगुणस्त्यागः सर्वसाधारणो विधिः ।
रेचकादिकमेकेऽत्र प्राणायामे क्रमं विदुः ॥२५॥

रेचकादित्रयं च स्यादिति वाक्यप्रमाणकाः ।
तदसत्पूरकाभावे रेचकानुपपत्तितः ॥२६॥

शारीरस्यैव वायोः स्याद्रेचनं नेति युज्यते ।
इडयाकर्षयेद्वायुं बाह्यं षोडशमात्रया ॥२७॥

इत्यादौ पूरकाद्येषु बाह्येस्मिन् कर्मताश्रुतेः ।
प्राणायाममिमं प्राहुरिति च क्रमबोधनात् ॥२८॥

नापि नानार्थतैवास्य गौरवेणावसीयते ।
प्राथम्ये रेचके किन्त्र शेषे पवनसंयमे ॥२९॥

कुम्भके रेचकाकांक्षा पवनेन निवर्तते ।
तस्मान्न रेचकादीति क्रमतात्पर्यकं वचः ।
तदेतत् षण्ढमुद्वाह्य मुग्धया पुत्रयाचनम् ॥३०॥

ऋष्यादीन्विसेन्मन्त्री प्राणायामं ततश्चरेत् ।
ततश्चमातृकां न्यस्येदिति तन्त्रेषु केषुचित् ॥३१॥

अन्तः पूजामथो कर्तुं पीठन्यासं समाचरेत् ।
आधारशक्तिमारभ्य वेदिकान्तं हृदिन्यसेत् ।
धर्मादीनंसयोरूर्वोरधर्मादीन् प्रविन्यसेत् ॥३२॥

मुखपार्श्वनाभिपार्श्वेषु प्रादक्षिण्येन साधकः ।
शेषादि पीठमन्त्रान्तं हृदिविन्यस्य तं स्मरेत् ॥३३॥

धर्ममारभ्य संप्रोक्तं पूजनं न्यसनं क्वचित् ।
ततो मन्त्रस्य ऋष्यादीन्विनियोगावधि स्मरेत् ॥३४॥

यद्येन ऋषिणा दृष्टं सिद्धिः प्राप्ता च येन वै ।
मन्त्रेण तस्य तत्प्रोक्तमृषेर्भावस्तदार्षकम् ॥३५॥

छादनाच्छन्द उद्दिष्टं वाससी इव चाकृतेः ।
आत्मा संछादितो देवैः पुरा मृत्योस्तु वै भयात् ॥३६॥

आदित्यैर्वसुभी रुद्रैस्तेन छन्दांसि तानि वै ।
यस्य यस्य तु मन्त्रस्य तद्दिष्टा या तु देवता ॥३७॥

तदाकारं भवेत्तस्य देवत्वं देवतोच्यते ।
पुराकल्पे समुत्पन्ना मन्त्राः कर्मार्थमेव च ॥३८॥

अनेनेदं तु कर्त्तव्यं विनियोगः स उच्यते ।
ऋषिच्छन्दोदैवतानि शिरोवदनहृत्सु च ।।३९।।

विन्यस्य करविन्यासो यदि कल्पो भवेत्तदा ।
न्यस्य तत्कल्पसंप्रोक्तैरङ्गमन्त्रैः करद्वये ।।४०।।

अङ्गुष्ठादिकनिष्ठान्तं तलयोस्तत् प्रविन्यसेत् ।
हृदयाय नमः पूर्वं शिरसे वह्निवल्लभा ।।४१।।

शिखायै वषडित्युक्तं कवचाय हूमितीरितम् ।
नेत्रयोर्वौषडित्युक्तम् अस्त्राय फडिति क्रमात् ।।४२।।

अङ्गमन्त्राः सकृद्दिष्टाः सर्वत्रागमवेदिभिः ।
मन्त्रशास्त्रं तथा चोक्तं प्राप्तमन्त्रेण धीमता ।।४३।।

यस्य मन्त्रस्य ये न्यासाः कर्तव्याः सिद्धिमिच्छता ।
जपतर्पणहोमार्चासिद्धमन्त्रकृता अपि ।।४४।।

अङ्गन्यासादिभिर्हीना न दास्यन्ति फलान्यमी ।
अतः कर्तव्यता तेषां सर्वथैव प्रकीर्तिता ।।४५।।

अस्त्रं च तत्रयोर्न्यस्य कुर्यात्तालत्रयं ततः ।
दिशस्तेनैव बध्नीयाच्छोटिकाभिः समन्ततः ।।४६।।

पञ्चाङ्गेऽस्त्रमनुन्यासं कनिष्ठायां समाचरेत ।
दीपिकायां विन्यसेत्पञ्चाङ्गमङ्गुलिपञ्चके ।।४७।।

इति वाक्यानुसारेण चास्त्रं तु तलयोर्न्यसेत् ।
इति यच्छारदावाक्यं तत्षडङ्गपरं भवेत् ।।४८।।

इत्याहुः केचिदपरे लक्षमन्त्रे च मन्त्रिणः ।
सामान्यस्य हि सङ्कोचो बाधकेन विधीयते ।।४९।।

न चात्र बाधकं किञ्चिद्दीपिकात्र न बाधिका ।
उपक्रमानुसारेण विशेषपरता भवेत् ।।५०।।

तस्याः सामान्यसंप्राप्तेः सङ्कोचोऽनुपपत्तितः ।
कल्प्योऽतो विरहात्तस्यास्तदभावविनिश्चयात् ।।५१।।

इति चित्तं समाधाय विलोकयतु युक्तिमान् ।
उरः शिरः शिखा वर्म्म नेत्र पाणितलेष्वपि ।।५२।।

अङ्गमन्त्रांस्ततो न्यस्येत्पञ्चाङ्गे नयनं त्यजेत् ।
अङ्गहीनस्य मन्त्रस्य स्वेनैवाङ्गानि कल्पयेत् ॥५३॥

जपारम्भे तु मन्त्राणां सामान्ये यं प्रकल्पना ।
करयोरङ्गविन्यासेऽग्राङ्गुष्ठाद्यङ्गमुल्लिखेत् ॥५४॥

सर्वत्र हृदयादिभ्यः करादीनां यथायथम् ।
अविशेषादिति प्राहुः केचिदुत्तानवेदिनः ॥५५॥

उच्यते हृदयादीनां ङेयुतानां नमोमुखैः ।
जातित्वं तत्कथं तत्राङ्गुष्ठाद्युल्लेख इष्यते ॥५६॥

आधारत्वेन तेषां चेत्तर्हिस्यान्मातृकालिपेः ।
विन्यासेऽपि ललाटादेरुल्लेखस्तुल्यताबलात् ॥५७॥

अर्थासङ्गतिरप्यत्र न तथा तन्निगद्यते ॥५८॥

हृदयं बुद्धिगम्यत्वं प्रणामः स्यान्नमः पदम् ।
क्रियते हृदयेनातो बुद्धिगम्यनमस्क्रिया ॥५९॥

तुङ्गार्थकं शिरः प्रोक्तं विषयाहरणे द्विठम् ।
शिरोमन्त्रेण चोत्तुङ्गं विषयाहृतिरीरिता ॥६०॥

शिखा तेजः समुद्दिष्टा वर्षाऽत्यङ्गमुच्यते ।
तत्तेजा(जोऽ)स्य तनुःप्रोक्ता शिखामन्त्रेणमन्त्रिणः॥६१॥

कवग्रहण इत्यस्माद्धातोः कवचसंभवः ।
हूंतेजस्तेजसा देवो गृह्यते कवचन्ततः ॥६२॥

नेत्रं दृष्टिः समुद्दिष्टा वौषड्दर्शनमुच्यते ।
दर्शनं दृशि येन स्यात्तत्तेजो नेत्रवाचकम् ॥६३॥

अमुत्र सादिकौ धातूस्तः क्षेपचलनार्थकौ ।
ताभ्यामनिष्टमाक्षिप्य चालयेत्फट्पदाग्निना ॥६४॥

प्रोक्तानीत्यङ्गमन्त्राणि सर्वतन्त्रेषु सूरिभिः ।
श्रीगार्ग्यसंहिताप्येनमर्थं साक्षादुवाच वै ॥६५॥

अङ्गन्यासकरन्यासावङ्गमन्त्रैः समाचरेत् ।
छिन्नमस्तामनौ तन्त्रे प्रोक्तं कण्ठरवेणतत् ॥६६॥

अथ प्रवक्ष ते मुद्राः षडङ्गानां यथाविधि ।
अङ्गुष्ठरहिताः पाणिशाखा हृदयशीर्षयोः ॥६७॥

अधोऽङ्गुष्ठा कृता मुष्टिः शिखायां मुद्रिका मता ।
करयोरुभयोः शाखाः कवचे परिकीर्त्तिताः ।।६८।।

यत्राक्षिणी मते तत्र तर्जनी मध्यमे मते ।
नेत्रत्रयं भवेद्यत्र तत्रानामापि संस्मृता ।।६९।।

नाराचमुष्टिनोत्थाप्य बाहुयुग्मं विधानवित् ।
अङ्गुष्ठतर्जनीभ्यां य (त्) विष्वग्जनयति ध्वनिम् ।।७०।।

विभक्तमस्त्रमुद्रा सा कीर्तितागमवेदिभिः ।
एताः षडङ्गमुद्रास्तु सर्वमन्त्रेषु योजयेत् ।।७१।।

ततो मन्त्रादिविन्यासो यदा तमपि साधकः ।
कुर्याद्विशेषकल्पोक्तं पदन्यासादिकं तथा ।।७२।।

तत्तत्कल्पविशेषोक्तानन्यान् न्यासान् समाचरेत् ।।७३।।

---

मनुना पुटितैर्वर्णैर्मातृकायाः सबिन्दुभिः ।
वर्त्मना शास्त्रदृष्टेन विन्यसेन्मन्त्रवित्ततः ।।१।।

अथर्ष्यङ्गकरन्यासस्ततो मुद्राः प्रदर्शयेत् ।
ततोऽस्त्रमनुना मन्त्री कुर्याद्दिग्बन्धनं सुधीः ।।२।।

ओँ नमः सुदर्शनास्त्रायास्त्रान्तं मनुरीरितः ।
ध्यात्वेष्टदेवतारूपमात्मानमथ पूजयेत् ।।३।।

मानसैरर्घपादाद्यैर्विधिना भक्तिभावितः ।
मानसैः कुसुमैरर्च्या(र्चा)सात्त्विकी साशुभा मता ।।४।।

अनिर्माल्यापरा शुद्धा मोक्षदा सिद्धिदाशुभा ।
तस्मात्सर्वप्रयत्नेन मानसं पूजनं शुभम् ।।५।।

आत्मान्तर्यागयोर्वैश्वदेवमिच्छन्ति केचन ।
भोजनानन्तरं चान्तर्वैश्वदेवं समाचरेत् ।।६।।

मूलाधारगते कुण्डे देवताग्निसमुज्ज्वले ।
धर्माधर्मान्विते न्यस्ते मूलमन्त्रपुरस्सरम् ।।७।।

इदन्तापात्रसम्पूर्णमहन्तापरमामृतम् ।
पराहन्तामये वह्नौ जुहोमि शिवरूपतः ।।८।।

एवं संचिन्त्यमनसा यथावन्मान्त्रिकोत्तमः ।
अमुं जुहोमि स्वाहेति प्रत्येकं जुहुयात्ततः ।।९।।

अहन्तासत्यपैशुन्य कामक्रोधादिकं हविः ।
मन एव स्रुवः प्रोक्तः सुषुम्ना स्रगुदोरिता ।।१०।।

तदन्ते तन्मयो भूत्वा जपेदिच्छानुरूपतः ।
तं जपं सर्वसम्पत्त्यै गुह्येत्यादि समर्पयेत् ।।११।।

ततस्तु देवतारूपो भूत्वा तिष्ठेत्कियत्क्षणम् ।
विज्ञानेश्वरसिद्धान्ते त्वन्यथामार्चनेरिता ॥१२॥

देहधीवायुवृत्तीनां देवतायां यदर्पणम् ।
चित्तयागे तदेवस्यादर्घादि त्रयमुत्तमम् ॥१३॥

द्वादशान्तमहापद्मसितदीधितिमण्डलात् ।
गलितैः सलिलैः सेकक्रिया स्नान मिहेष्यते ॥१४॥

अर्चनायाः समस्तायाः सगुणायाः समर्पणम् ।
देवताया भवेद्गन्धः सपर्यासु महेश्वरि ॥१५॥

समस्तशब्दसंयुक्त गगनस्यापि चेतसा ।
देवतायां नभः पुष्पपूजास्यादिह कथ्यते ॥१६॥

भवेतां धूपदीपौ च पवनाग्न्यात्मकौ धिया ।
समर्पयेत्समन्तात्तौ मनुवित् स्थिरमानसः ॥१७॥

रसैरनेकैर्युक्तस्य जलतत्त्वस्य सादरम् ।
समर्पणं स्यात्सर्वस्य निवेद्यं प्रीतिदायकम् ॥१८॥

होमे भेदोन्व(नु)लक्ष्योऽत्र देवतायै शिवानने (नले) ।
नृत्यमज्ञत्वधि······गीतं वाक् परिपूर्णता ॥१९॥

एवं यन्मानसं प्रोक्तं दीपिकादौ समर्चनम् ।
तदेवमपि सम्पन्नमित्याहुः साम्प्रदायिकाः ॥२०॥

---

ततोऽर्घस्थापनं कुर्यादिष्टदेवार्थमादरात् ।
गन्धपुष्पाक्षतयवकुशाग्रतिलसर्षपैः ।।१।।

सदूर्वैः सर्वदेवानामेतदर्घ्यमुदीरितम् ।
अस्त्रेण शंखं प्रक्षाल्यवामतो वह्निमण्डले ।।२।।

स्थापयित्वा हृदा तत्र गन्धपुष्पाक्षतादिकान् ।
निःक्षिप्य प्रतिलोमेन मूलान्ते मातृकां जपन् ।।३।।

सबिन्दुकां जगद्बीज बिन्दुस्रुतसुधाधिया ।
तोयैरापूरयेच्छुद्धैः योगशास्त्रविशारदः ।।४।।

दीपिकादिमतेत्वत्र मूलमन्त्रो न पठ्यते ।
केचिन्मूलं पठन्त्येव विधाने मातृकामनोः ।।५।।

आधारं पावकं शंखं सूर्यं तोयं सुधाकरम् ।
चिन्तयित्वा कलास्तेषां तत्र तत्र विचिन्तयेत् ।।६।।

ततो दशकलात्मानं वह्निमण्डलमाश्रयेत् ।
दिवाकरकलात्मानं तथावै भानुमण्डलम् ।।७।।

निशाकरकलात्मानं तथा नैशाकरं यजेत् ।
ममाद्यबीजं विज्ञेयमं द्वितीयं प्रकीर्तितम् ।।८।।

तृतीयम्बं (मुं) समाख्यातमेतान्यादौ नियोजयेत् ।
आवाहयेत्ततो मन्त्रो तीर्थमङ्कुशमुद्रया ।।९।।

मार्तण्डमण्डलात्तीर्थमनुस्तत्रैव कल्प्यते ।
गङ्गे च यमुने चैव गोदावरि सरस्वति ।
नर्मदे सिन्धु काबेरि जलेऽस्मिन् सन्निधिंकुरु ।।१०।।

अयं तीर्थमनुः प्रोक्तो दुरितौघ विनाशनः ।
ऋज्वीं च मध्यमां कृत्वा तर्जनीमध्यपर्वणि ।।११।।

संयोज्याकुञ्चयेत्किञ्चित् मुद्रैषाङ्कुश संज्ञिका ।
तत्रेष्ट देवतां मन्त्री स्वीयहृत्कमलादपि ॥१२॥

आवाह्य गालिनीं मुद्रां शिखामन्त्रेण दर्शयेत ।
कनिष्ठाङ्गुष्ठकौ सक्तौ करयोरितरेतरम् ॥१३॥

तर्जनीमध्यमानामसंहता भुग्नवर्जिताः ।
मुद्रैषा गालिनी प्रोक्ता शङ्खस्योपरिचालिता ॥१४॥

कराभ्यामवगुण्ठ्यैतदमृतीकृत्य मुद्रया ।
सुरभेर्मूलमन्त्रेण मन्त्रयेत्सलिलं ततः ॥१५॥

दक्षिणा निबिडा मुष्टिर्दीर्घाधोमुख तर्जनी ।
अवगुण्डनमुद्रेयमभितो भ्रामिता मता ॥१६॥

अन्योन्याभिमुखाश्लिष्टकनिष्ठानामिके पुनः ।
तथैव तर्जनी मध्या धेनुमुद्रा समीरिता ॥१७॥

विन्यासेनाङ्गमन्त्राणां सकलीकृत्य रक्षयेत् ।
अस्त्रमस्त्रेण गन्धाद्यैर्हृदा तत्रेष्टदेवताम् ॥१८॥

संपूज्य देवतारूपं तज्जलं मत्स्यमुद्रया ।
आच्छाद्य संस्पृशन्नष्टवारं मूलं जपेत्ततः ॥१९॥

अधोमुखो दक्षहस्ते तादृशो वामहस्तकः ।
मत्स्यमुद्रा निगदिता शंख संस्करणे मता ॥२०॥

दक्षिणे प्रोक्षणीपात्रं निधायाद्भिः प्रपूरयेत् ।
किञ्चिदर्घाम्बु दत्त्वात्र हस्तेनाङ्गानि चात्मनः ॥२१॥

साधनान्यभिषिञ्चेयुर्देहपूजामथाचरेत् ।
निजनाथं शिरोदेशे आधारे गणपं यजेत् ॥२२॥

इष्ट्वा न्यासविधानेन पीठार्थं तमथादरात् ।
आधारे हृदये मध्ये भ्रुवो मूलमनोर्यजेत् ॥२३॥

मूलेन तेजस्त्रितयं बीजेनैकीकृतस्तु (न्तु) तत् ।
तत्तत्कल्पविशेषोक्त प्रकारान्यन्तविग्रहम् ॥२४॥

अभ्यर्चयेदासनाद्यैर्भूषां तैरथ तत्तनौ ।
यजेदङ्गादिकं मन्त्री तत्तत्कल्पप्रकाशितम् ॥२५॥

विना निवेद्यं गन्धाद्यैरुपचारैः समर्चयेत् ।
अभ्यर्च्य गन्धपुष्पाभ्यां बिन्दुस्रुतसुधारसैः ।।२६।।

देवं तु प्रीणयेदेतदुवाच क्रमदीपिका ।
अभ्यर्च्य प्राणमायम्य जपेन्मन्त्रं यथाक्षणम् ।।२७।।

प्राणायामं पुनः कृत्वा जपमेव समर्पयेत् ।
बीजमष्टोत्तरशतं जपेत् प्रणवसंपुटम् ।।२८।।

शेषं वक्तव्यमार्गेण विदध्यादविरोधिनम् ।
अगस्त्य संहितायां तु प्रोक्तमावरणार्चनम् ।।२९।।

आत्मयागं विधायोक्तं तथा वान्तर पूजनम् ।
ततो विज्ञाप्य देवेशं परिवारांश्च पूजयेत् ।।३०।।

एवं संपूजितो देवः सर्वान् कामान् प्रयच्छति ।
बाह्यपूजां ततः कुर्याद्दै (दै) हिकाभ्युदयाय वै ।।३१।।

युक्तं चैतत् प्रधाने तु पूज्यमानेऽङ्गपूजनम् ।
बाध्यते केन मानेन नाप्यनुक्तिर्निवेदनात् ।।३२।।

यो यद्भक्त इतिन्यायान्महादानादिकर्मणि ।
यथा ग्रहपदेनैव साधिप्रत्यधिदेवताः ।
गृह्यन्ते देवतास्तद्वदिति तन्त्रविदो विदुः ।।३३।।
सर्वमेतत्प्रयुञ्जीत प्रोक्षणीस्थेन वारिणा ।
विसृज्य प्रोक्षणीतोयं सलिलैः परिपूरयेत् ।। ३४।।
किञ्चिदर्घाम्बु दत्वात्र उपचारान् प्रकल्पयेत् ।
अर्घस्योत्तरतः पाद्यं कार्यमाचमनीयकम् ।।३५।।
तथैव मधुपर्कश्च पुनराचमनादिकम् ।
आत्मनः पुरतः शंखं पूर्वतः सुसमाहितः ।।३६।।
पाद्याद्यर्थं न्यसेत्पात्राण्येवं क्वचिदुदीरितम् ।
एकस्मिन्नथवा पात्रे पाद्यादीनि प्रकल्पयेत् ।।३७।।
तत्त्व सागरसम्प्रोक्तं पात्रलक्षणमुत्तमम् ।
हैरण्यं राजतं ताम्रं कांस्यं पालाशपत्रकम् ।।३८।।
रत्नोद्भवं शंखजं वा पद्मपत्रमथापि वा ।
पात्रमष्टविधं प्रोक्तं सर्वसिद्धिकरं परम् ।।३९।।

सर्वेष्वेव च पात्रेषु शंखपात्रं विशिष्यते ।
षट्त्रिंशदङ्गुलीपात्रमुत्तमं परिकीर्तितम् ॥४०॥

मध्यमं तत्त्रिभागोन मधमं द्वादशाङ्गुलम् ।
वस्वङ्गुलिविहीनं तु न पात्रं कारयेत्क्वचित् ॥४१॥

दक्षभागे प्रविन्यस्येत् पुष्पपात्रं पुरः पुनः ।
गन्धाक्षतादिकं मन्त्री साधनं सकलं न्यसेत् ॥४२॥

बाह्यपूजामथो वक्ष्ये मन्त्रिणां हितकाम्यया ।
आदौ लिखेद्यन्त्रराजं तत्तत्कल्पोक्तरूपवत् ॥४३॥

कामक्रोधादि निःशेषमनोमलनियन्त्रणात् ।
यन्त्रमित्याहुरेतस्मिन् देवः प्रीणाति पूजितः ॥४४॥

तत्तत्कल्पोक्तद्रव्येण लिखेद्यन्त्रमनुत्तमम् ।
सौवर्णे राजते ताम्रे पीठे भूर्जे पटे भुवि ॥४५॥

विना यन्त्रेण चेत्पूजा देवता न प्रसीदति ।
नोक्तं यन्त्रं यदा कल्पे तदा भूपुरसंयुतम् ॥४६॥

अष्टपत्रं शुभं पद्मं चतुर्द्वारं विभूषितम् ।
तन्त्रोक्तविधिनालिख्य पूजयेदिष्टदेवताम् ॥४७॥

पद्मसंलिखनं चैतच्छक्तिपूजानुरोधतः ।
पूजाधारतयोक्तत्वादावश्यकमिहोच्यते ॥४८॥

उत्तरस्यामथ गुरून् दक्षिणे गणनायकम् ।
ऊर्ध्वमूर्ध्वं मध्यभागे ततः सम्पूजयेद्बुधः ॥४९॥

अधः कूर्मशिलारूढां शतचन्द्रनिभप्रभाम् ।
आधारशक्तिं प्रयजेत्पङ्कजद्वयधारिणीम् ॥५०॥

प्रकृतिं पूजयेन्मन्त्री ततः कल्पोक्तवर्त्मना ।
मूर्ध्नितस्याः समासीनं कूर्मं नीलाभमर्चयेत् ॥५१॥

ऊर्ध्वं ब्रह्मासनासीनमनन्तं कुन्दसन्निभम् ।
यजेच्चक्रधरं मूर्ध्नि धारयन्तं वसुन्धराम् ॥५२॥

तमालश्यामलां तत्र नीलेन्दीवरधारिणीम् ।
अभ्यर्चयेद्वसुमतीं स्फुरत्सागरमेखलाम् ॥५३॥

क्षीरसिन्धुं रत्नद्वीपं ततः कल्पमहीरुहान् ।
अधस्तात् पूजयेत्तेषां वेदिकां मण्डलोज्ज्वलाम् ।।५४।।

रक्तश्याम हरिद्रेन्द्रनीलाभान् पादरूपिणः ।
वृषकेसरिभूतेभरूपान् धर्माधिकान् भजेत् ।।५५।।

गात्राणि पूजयेत्ताँस्तु अपूर्वानुक्तलक्षणान् ।
आग्नेयादिषु कोणेषु दिक्षु चाथाम्बुजं यजेत् ।।५६।।

आनन्दकन्दं प्रथमं संविन्नालमनन्तरम् ।
सर्वतत्त्वात्मकं पद्ममभ्यर्च्य तदनन्तरम् ।।५७।।

मन्त्री प्रकृति पत्राणि विकारमयकेसरान् ।
पञ्चाशद्वर्णबीजाढ्यां कर्णिकां च प्रपूजयेत् ।।५८।।

धर्मादिपूजनान्ते तु प्रोच्यानन्तसमर्चनम् ।
केचित्पद्मपदेनैव पद्मपूजनमूचिरे ।।५९।।

प्रगवांशैस्त्रिभिः सूर्यमण्डलादीनि पूजयेत् ।
आद्येन सौरं संपूज्य तं तापिन्यादि तत्कलाः ।।६०।।

परेणाभ्यर्च्य शाशाङ्क(।)ममृतादिकलां यजेत् ।
ॐष(उष)र्बुधं तृतीयेन धूम्रार्चिः प्रभृतीः कलाः ।।६१।।

सितरक्तासिताः प्रोक्ता गुणाः पीठोपरिस्थिता ।
सत्त्वं रजस्तमः प्रोक्ता आदिबीजैः समर्चयेत् ।।६२।।

आत्मानमन्तरात्मानं परमात्मानमादरात् ।
आदिबीजादिकानेतान् यथाविधि समर्चयेत् ।।६३।।

ज्ञानात्मानं यजेन्मन्त्री मायादिमथ संयजेत् ।
किञ्जल्केषु तथा मध्ये शक्तीर्नव यथाक्रमम् ।।६४।।

स्वमन्त्रेण ततः पीठं मूर्तिं मूलेन कल्पयेत् ।
कल्पोक्तैरथवा मन्त्रैर्मूलमुच्चार्य साधकः ।।६५।।

छायायां कल्पवृक्षस्य गन्धाद्यैर्मूर्तिमर्चयेत् ।
देवतां कल्पसंप्रोक्तरूपां ध्यायेत्ततः परम् ।।६६।।

ध्यानमात्मेष्टदेवस्य मनसा वेदनं मतम् ।
तदपि द्विविधं प्रोक्तं सगुणं निर्गुणं तथा ।।६७।।

यज्जीवब्रह्मणोरैक्ये सोऽहंस्यामिति वेदनम् ।
तदेवं निर्गुणं ध्यानमिति ब्रह्मविदो विदुः ।।६८।।

आत्मनो हृदयाम्भोजं कर्णिकाकेसरान्वितम् ।
प्रफुल्लं सोमसूर्याग्निमण्डलेन विराजितम् ।।६९।।

स्वीयेष्टदेवतां तत्र ध्यायेदागमवेदिताम् ।
एवं यद्वेदनं तद्धि सगुणं ध्यान मुच्यते ।।७०।।

मूलाधारे प्रदीपाभं देवतेजो विचिन्तयेत् ।
मूलमन्त्रेण तत्तेजः सुषुम्नावर्त्मना शिवे ।।७१।।

संयोज्यानीय भालान्तं चिन्तयित्वेन्दुसन्निभम् ।
नासिकारन्ध्रमार्गेण निर्गतं सुमनोहरम् ।।७२।।

करण्डपुष्पसंभारे मातृकाम्भोजरूपिणि ।
संयोज्य ब्रह्मरन्ध्रेण मूर्तौ तस्यां विधानतः ।।७३।।

आवाहनं बुधः कुर्यादावाहनस्य मुद्रया ।
आवाह्य स्थापयेत् सम्यक् संस्थापनाख्यमुद्रया ।।७४।।

पश्चात्तं सन्निधीकृत्य सन्निधापनमुद्रया ।
संनिरुध्य निरोधिन्या सम्मुखीकृत्य मुद्रया ।।७५।।

सम्मुखीकरण्या पश्चात् सकलीकृत्य साधकः ।
सकलीकरण्या पश्चादवगुण्ठनमुद्रया ।।७६।।

अवगुण्ठ्यामृतीकृत्यामृतीकरणमुद्रया ।
परमीकरणीं बद्ध्वा विदध्यात् परमीकृतिम् ।।७७।।

उद्देशानुक्रमादासामुच्यन्ते लक्षणानि तु ।
हस्ताभ्यामञ्जलिं बद्ध्वानामिकामूलपर्वणोः ।।७८।।

अङ्गुष्ठं निःक्षिपेत्सेयं मुद्रात्वावाहनी मता ।
अधोमुखी त्वियं चेत्स्यात्स्थापिनी मुद्रिका मता ।।७९।।

उच्छ्रिताङ्गुष्ठमुष्ट्योश्च संयोगात्सन्निधापिनी ।
अन्तः प्रवेशिताङ्गुष्ठा सैव संबो(रो)धिनी मता ।।८०।।

उत्तानमुष्टियुगला सम्मुखीकरणी मता ।
देवताङ्गे षडङ्गानां न्यासः स्यातसकलीकृतिः ।।८१।।

अवगुण्ठनिका मुद्रा धेनुमुद्रा प्रकीर्त्तिता ।
अन्योन्य ग्रथिताङ्गुष्ठा प्रसारित पराङ्गुलिः ॥८२॥

महामुद्रेयमुदिता परमीकरणे बुधैः ।
प्रयोजयेदिमा मुद्रा देवताह्वानकर्मणि ॥८३॥

शालग्रामे स्थावरे च नावाहन विसर्जने ।
शालग्रामशिलायां तु नित्यं सन्निहितो हरिः ॥८४॥

इति केचिद्वदन्त्यत्र बौधायन निदर्शनात् ।
सर्वत्र परिपूर्णस्य तत्त्वरूपस्य तेजसः ॥८५॥

सादरं सम्मुखीभाव आवाहनमुदीरितम् ।
इति सिद्धान्तसारीयवचनस्यानुरोधतः ॥८६॥

शिलादावपि कुर्वन्ति केचिदावाहनं बुधाः ।
शिवस्यावाहितस्यास्य विद्याद्देहेऽत्र सन्निधिम् ॥८७॥

स्थिरीकरणमुद्दिष्टं स्थापनं भक्तितोऽर्चने ।
पूजां प्रपूज्यमानां तु गृहीत्वा निग्रहादिकम् ॥८८॥

कर्तुं सामर्थ्यमस्येह तत्सान्निध्यं प्रचक्ष्यते ।
आसमाप्तेस्तु पूजायां तान्निध्यं हि शिवस्य यत् ॥८९॥

स सन्निबो(रो)ध उद्दिष्टो विभोरप्यस्य भक्तितः ।
आनन्दायतनं तत्त्वं सच्चिदानन्दलक्षणम् ।
तदत्र सकले व्याप्तं ध्येयं स्यादवगुण्ठनम् ॥९०॥

अपि भिन्नस्वभावानां तदभिन्नप्रयोजनम् ।
अङ्गानामङ्गिना सार्धममृतीकरणं मतम् ॥९१॥

क्षमा तस्यापराधानां विज्ञेया परमाकृतिः ।
आवाहनादिकार्याणामयमर्थः प्रकाशितः ॥९२॥

व्योमेन्द्वौरस मा(ना, ला)वर्णैः कर्णिकाभिर्द्विधा द्विधा ।
केसराः पञ्चवर्गेण यशना(ला)र्णादिकैरपि ॥९३॥

पत्राणि भूषितानिस्युराशास्वाश्रषु(स्वस्त्रेषु)चक्रमात् ।
नास्तानाङ्गलिनौज्ञेयातद्वत् क्षोणीपुरस्य वै ॥९४॥

मातृकाम्भोजमाख्यातं सर्वापद्विनिवारणम् ।।९५।।
देवदेहाद्बहिर्भूतं परिवारगणं बुधः ।
स्फुलिङ्गरूपिणं स्थाने स्वे स्वे मन्त्र्युपवेशयेत् ।।९६।।

अथोपचारान् कुर्वीत मूलमन्त्रपुरःसरम् ।
मूलमन्त्रं समुच्चार्य पीठं तस्यै निवेदयेत् ।।९७।।

तत्र तत्र जलं दद्यादुपचारान्तरान्तरे ।
नन्वेतज्जलदानं स्यात् क्वच (क्वाचि) त्कोवा नियामकः ।।९८।।

नियमव्यतिरेकेण दानं नातिप्रसङ्गतः ।
तस्मात्कुत्र जलं देयं कथं स्यादेष निर्णयः ।।९९।।

उच्यते तत्र तत्रेति वाक्ये वीप्साद्वयश्रुतेः ।
स्थानं नियमयत्येका परा साकल्यबोधिका ।।१००।।

तथाच यत्र दानं स्यादुपचारस्य वा यथा ।
तथा तत्रैव दातव्यं जलमित्यवगम्यते ।।१०१।।

सर्वोपचारवस्तूनामभावे भावयेद्धिया ।
उपचारप्रदानेषु विशिष्टो नास्तिचेन्मनुः ।।१०२।।

ताराद्यां ङेसमायुक्तां नमोऽन्तां देवताभिधाम् ।
समुच्चरेदयं मन्त्रो मूलादिः परिकीर्तितः ।।१०३।।

स्वागतं कुशलं चापि निगदेदथ साधकः ।
अर्घं दिशेत्ततो मूर्ध्नि शिरोमन्त्रेण संस्कृतम् ।।१०४।।

पाद्यं पादाम्बुजे दद्याद्देवस्य हृदयानुना ।
तच्च श्यामाकदूर्वाब्जविष्णुक्रान्ताजलैर्मतम् ।।१०५।।

स्वधानुना ततस्तुण्डे दद्यादाचमनं त्रिधा ।
जातीलवङ्गकक्कोलैस्तदुक्तं मन्त्रवेदिभिः ।।१०६।।

क्वचिदर्घप्रदानान्ते पाद्यमाचमनीयकम् ।
प्रयच्छेदिति संप्रोक्तं विकल्पस्त्वनयोर्द्वयोः ।।१०७।।

तूर्णयागादिके प्रोक्तं कुर्यादर्घादिकेष्वपि ।
मन्त्रान्नमोन्वितानेव तदुक्तं तत्र मन्त्रिभिः ।।१०८।।

नमः स्वधा च स्वाहा च वौषडिति यथाक्रमम् ।
हृत् पुरः सरमुच्चार्य पाद्यादीनि प्रकल्पयेत् ।।१०९।।

हृन्मन्त्रेणाथ शिरसि अर्घं दूर्वाक्षतान्वितम् ।
अर्घ्यं नम इति प्रोच्य दद्यात्पाद्यंच पादयोः ।।११०।।

हृत्पुरःसरमित्येतदन्यथासङ्गतं भवेत् ।
यदि न स्यात्पुनस्तस्योच्चारणार्थमिदं वचः ।।१११।।

स्वधापदेन तद्बीजं लक्ष्यमित्यपि कश्चन ।
स्वधेत्याच मनीयं च त्रिवारं मुखपङ्कजे ।।११२।।

एवं विधादिवाक्यानामनुरोधान्मनुर्मतः ।
स्वधेत्याराध्यचरणाः प्रदीपे व्यक्तमूचिरे ।।११३।।

स्वधानुना ततः कुर्यान्मधुपर्कं मुखाम्बुजे ।
आज्यं दधिमधून्मिश्रं मधुपर्कः समीरितः ।।११४।।

यथोक्तवस्त्वलाभे तु ग्राह्यं तदनुकारि यत् ।
यवानामिव गोधूमा व्रीहीणामिव शालयः ।।११५।।

तदलाभेऽपि गन्धाद्यैः सदृशं परिकल्पयेत् ।
तेनैव मनुना दद्यादद्भिराचमनीयकम् ।।११६।।

स्नानाय प्रार्थ्य यच्छेत स्नानवस्त्रं सुशोभनम् ।
अभ्यङ्गोद्वर्तनं कुर्यान्महाराजोपचारवत् ।।११७।।

गन्धाद्भिः कारयेत् स्नानं दद्यादाचमनीयकम् ।
केशाङ्गमार्जनं वस्त्रं दत्त्वा सूक्ष्मे दुकूलके ।।११८।।

यज्ञसूत्रं ततो दत्त्वा दद्यादाचमनं पुनः ।
संस्थाप्यमण्डले रम्ये दिव्यमाल्यानुलेपनैः ।।११९।।

अन्यैराभरणैर्दिव्यैर्नानारत्नसमन्वितैः ।
अलङ्कृत्य ततो मन्त्री तत्तत्कल्पप्रकाशितम् ।।१२०।।

अङ्गादिकं यजेद्देहे देवताया विधानवित् ।
चन्दनं मलयोत्पन्नमनाघ्रातं सुशीतलम् ।।१२१।।

कर्पूरागुरुसन्मिश्रं ततो मन्त्री निवेदयेत् ।
न्यासक्रमेण मनुना पुटितैर्मातृकाक्षरैः ।।१२२।।

तं यजेद्गन्ध पुष्पाद्यैरिति तन्त्रेषु केषु चित् ।
उत्तमाङ्गहृदाधारपादसर्वाङ्गकैः क्रमात् ।।१२३।।

पञ्चकृत्वस्ततः कुर्यात्पुष्पाञ्जलिमनन्यधीः ।
कमले करवीरे द्वे कुमुदे तुलसीद्वयम् ॥१२४॥
जातीद्वयं केतके द्वे कल्हारं चम्पकोत्पले ।
कुन्दमन्दारपुंनाग पाटलानाग चम्पकम् ॥१२५॥
आरग्वधं कर्णिकारं पारन्ती नवमालिका ।
सौगन्धिकं सकोरण्टं पलाशाशोकमल्लिकाः ॥१२६॥
धूत्थुरं सर्जकं बिल्वमर्जुनं मुनिपत्रकम् ।
अन्यान्यपि सुगन्धीनि पुष्पपत्राणि साधकः ॥१२७॥
उपदिष्टानि पूजायामाददीत विचक्षणः ।
मलिनं भूमिसंस्पृष्टं कृमिकेशादि दूषितम् ॥१२८॥
स्पृष्टमङ्गेन चाघ्रातं मुकुलं चोषितं त्यजेत् ।
देवस्य मस्तकं कुर्यात्कुसुमोपहितं सदा ॥१२९॥
पूजाकाले देवताया नोपरि भ्रामयेत् करम् ।
गोपालस्य तु पूजायां कुसुमाञ्जलिपञ्चके ॥१३०॥
अन्यथा कीर्तितो धीरैः प्रकारः स निगद्यते ।
तुलसीयुगलं दद्यात्पादद्वन्द्वे विधानवित् ॥१३१॥
मध्ये ह्यारियुगलं शीर्षे पद्मयुगं तथा ।
सर्वैः सर्वतनौ दद्यात्परिवारानथार्चयेत् ॥१३२॥
[पादयोरेक एव स्यादञ्जलिः परमार्थतः ।
किन्तु षड्भिरपीत्युक्तेर्मूर्ध्निस्यादञ्जलिद्वयम् ॥१३३॥
दीपिकार्थ इति स्पष्टो निरटङ्कीह माहशैः ।]
अथेष्टदेवतानुज्ञां गृहीत्वाङ्गानि पूजयेत् ।
प्रायः प्रथमता तेषां क्वचिदेवान्यथा भवेत् ॥१३४॥
केसरेष्वग्निकोणादि हृदयादीनि पूजयेत् ।
नेत्रमग्रे दिक्षुचास्त्रमङ्गमन्त्रैर्नमोऽन्तकैः ॥१३५॥
अस्त्रमन्त्रं महादिक्षु नेत्रमीशानगोचरे ।
स्फुटमेवेति यत्प्राह पूजने गार्ग्यसंहिता ॥१३६॥
अङ्गान्येव प्रकुर्वीत नमोन्तानीति केचन ।
तुषार स्फटिकश्यामनीलकृष्णारुणत्विषः ॥१३७॥

वरदाभयदायिन्यः प्रधानतनवः स्त्रियः ।
ध्यातव्या विदुषाऽनेन क्रमेणैवाङ्गदेवताः ।।१३८।।

ननु पूर्वादिकं ग्राह्यं किं देवस्याथवात्मनः ।
नियामकस्य विरहात् सन्देहोऽत्र विजायते ।।१३९।।

अत्रोच्यते देवताया ग्राह्यं पूर्वादिकं बुधैः ।
ज(य)ष्टुरभिमुखादेवा देवाभिमुखतो दश ।
प्राच्यादि हरितो ज्ञेयाः पूजाहोमादिकर्मणि ।।१४०।।

इति सर्वाभ्युपेतस्य वचनस्यानुरोधतः ।
यत्रैवानुपपत्तिः स्यात्तत्रैवं दिक्प्रकल्पना ।।१४१।।

अन्यत्र प्रकृता एव ग्राह्याः प्राच्यादिकादिशः ।
इत्येके मन्त्रिणः प्राहुरपरे तु समन्ततः ।।१४२।।

प्रोक्तवाक्यानुरोधेन दिशां नियममूचिरे ।
पश्चादभ्यर्चनायाःस्युः कल्पोक्ता वृत्तयः क्रमात् ।।१४३।।

ततो यजेल्लोकपालान्मूलपारिषदान्वितान् ।
हेतिजात्याधिपोपेतानन्यथा कश्चिदिच्छति ।।१४४।।

पत्राधीश्वरवर्णास्त्र परिवाराङ्ग संयुतान् ।
इन्द्राय वज्रहस्ताय सुराधिपतये पदम् ।।१४५।।

सवाहनपदं पश्चात् परिवाराय इत्यपि ।
नमोन्तं चैवमन्येषां वाहनादिकमुद्धरेत् ।।१४६।।

तूर्णायागेषु सम्प्रोक्तमेवमिन्द्रादिपूजनम् ।
इन्द्रो वह्निर्यमो यक्षो वरुणः पवनो विधुः ।।१४७।।

ईशानः पन्नगाधीशस्त्वध ऊर्ध्वं पितामहः ।
पीतो रक्तोऽसितो धूम्रः शुक्लो धूम्रसितावुभौ ।।१४८।।

गौरोरुणः क्रमादेते वर्णतः परिकीर्त्तिताः ।।१४९।।

करपद्मस्थितस्वास्त्रा दिव्यवेशाः स्रगुज्ज्वलाः ।
वज्रं शक्तिं दण्डमसिं पाशमङ्कुशकं गदाम् ।
शूलं चक्रं पद्ममेषामायुधानि क्रमाद्विदुः ।।१५०।।

पीतशुक्ल सिताकाश विद्युद्रक्त सितासिताः ।
कुरुविन्द पाटलाभा वज्राद्याः परिकीर्त्तिताः ।।१५१।।

स्वस्वायुधाभययुतपाणिपद्माः सुशोभनाः ।
ऐरावतस्तथा मेषो महिषः प्रेतसंज्ञकः ॥१५२॥

मकराख्यो मृगः पश्चादुरगो वृषभस्तथा ।
कूर्मो हंसः क्रमादेषां वाहनानि विदुर्बुधाः ॥१५३॥

क्वचिन्नैवेद्यदानान्ते प्रोक्तमावरणार्चनम् ।
साम्प्रदायिक एवासौ विकल्पेनान्वितो भवेत् ॥१५४॥

समस्तपरिवाराणां यो न पूजाविधौ क्षमः ।
स इहाङ्गेन्द्रवज्राद्यैः पूजयेदिष्टदेवताम् ॥१५५॥

प्रावृतीः परिपूज्याथ धूपादीन् विनिवेदयेत् ।
नीचैर्धूपं प्रकुर्वीत ताम्रकांस्यादिनिर्मिते ॥१५६॥

भाजने द्विपदे भुग्ननालपद्माकृतौ शुभे ।
साराङ्गारविनिःक्षिप्तैर्गुग्गुलवगुरुवृक्षजैः ॥१५७॥

निर्यासाद्युत्थितैरन्यैर्गन्धद्रव्यैरथोदितैः ।
अनन्यार्पितधूपोऽयं शस्यतेऽर्चनकर्मणि ॥१५८॥

दीपोऽपि धूपवत् पात्रे पद्माकार विनिर्मिते ।
प्रतिपत्रं प्रदीप्तश्च वर्त्या गव्यघृताक्तया ॥१५९॥

कर्पूरगर्भया दीप्त उच्चैर्देयः सुसौरभः ।
शारदायामतिस्पष्टं लक्षणं धूपदीपयोः ॥१६०॥

सगुग्गुलवगुरूशीरशर्करामधुचन्दनैः ।
धूपयेदाज्यसंमिश्रैर्नीचैर्देवस्य देशिकः ॥१६१॥

वर्त्याकर्पूर गर्भिण्या सर्पिषा तिलजेन वा ।
आरोप्य दर्शयेद्दीपानुच्चैः सौरभशालिनः ॥१६२॥

ततः पुष्पाञ्जलिं दत्त्वा पाद्यमाचमनीयकम् ।
नैवेद्यस्य प्रदानार्थं प्रार्थयेदिष्ट देवताम् ॥१६३॥

सौवर्णे राजते ताम्रे कांस्ये रत्नादि निर्मिते ।
पात्रे निधाय नैवेद्यं मृदु सोष्णं सुपाचितम् ॥१६४॥

स्वादूपदंशं विमलं पायसं सहशर्करम् ।
कदलीपनसाम्रादि दधि दुग्धं प्रपानकम् ॥१६५॥

संस्थाप्य पुरतः प्रोक्ष्य तारेण सुमनो न्यसेत् ।
अस्त्रोक्षितं चक्रमुद्रारक्षितं वायुवारिणा ।।१६६।।

विशोष्य वह्निना दग्ध्वा दक्षिणपाणिना ।
वामहस्ते सुधाधारापूर्णं मूलामृतीकृतम् ।।१६७।।

स्पृष्ट्वा त्रिशो जपेन्मन्त्रं मुद्रया धेनुसंज्ञया ।
अमृतीकृत्य गन्धाद्यै र्नैवेद्यमथ पूजयेत् ।।१६८।।

अथ सम्प्रार्थयेदेवमस्यस्याद्विसरेन्मह (स्याद्विसरन्महः) ।
स्वाहान्तं मूलमुच्चार्य जलं दत्त्वा निवेदयेत् ।।१६९।।

निवेदयामि भवते जुषाणेदं हविर्हरे ।
निवेद्यार्पणमन्त्रोऽयं सर्वार्चासु निजाख्यया ।।१७०।।

अथामृतोपस्तरणमसीत्याचमयेत्ततः ।
ग्रासमुद्रां वामदोष्णा विकचोत्पत्रसन्निभाम् ।।१७१।।

प्रदर्शयेद्दक्षिणेन प्राणादीनां च दर्शयेत् ।
मुद्राः कनिष्ठिकानामे अङ्गुष्ठशिरसा स्पृशेत् ।।१७२।।

तेनाद्या जायते तासु परा तर्जनिमध्यमे ।
तृतीयानामिकामध्ये मध्यातर्जन्यनामिकाः ।।१७३।।

चतुर्थी सकनिष्ठास्ताः पञ्चीसमुदीरिता ।
प्राणापान व्यानोदानसमानास्तारपूर्विकाः ।।१७४।।

चतुर्थ्यग्निवधूयुक्ताः प्राणादिमनवस्त्वमी ।
उक्ताः प्राणादिका मुद्रा दर्शनीयाः क्रमेण वै ।।१७५।।

हस्तौतु सम्मुखौ कृत्वा संलग्नौ सम्प्रसारितौ ।
कनिष्ठाङ्गुष्ठकौ युक्तौ मुद्रैषा चक्रसंज्ञिता ।।१७६।।

ततो निवेद्यमुद्रिकां प्रधानया करद्वये ।
स्पृशन्ननामिकां निजां मनुं जपन् प्रदर्शयेत् ।।१७७।।

ध्वौं नमः पराय पदमाभाष्य वामने वदेत् ।
अनिरुद्धाय चाभाष्य निवेद्यं कल्पयामि च ।।१७८।।

मन्त्रोऽयं वैष्णवे तन्त्रे शैवादावेवमूहयेत् ।
ततः पिष्टकसंजातान् समवर्तिसमन्वितान् ।।१७९।।

घृतादिज्वालितान्मन्त्री उच्चैर्दीपान् प्रदर्शयेत् ।
पारावतभ्रमाकारानतिदीप्तिसमन्वितान् ॥१८०॥

आदाय पाणिना ध्यायन् मूर्ध्निनीराजयेत् प्रभुम् ।
आरात्रिकमिति प्रोक्तं घण्टावादनपूर्वकम् ॥१८१॥

दक्षिणे स्थण्डिलंकुर्यात्तत्राधाय हुताशनम् ।
संस्कृत्य विधिवद्विद्वान् वैश्वदेवं समाचरेत् ॥१८२॥

तत्र सम्पूज्य गन्धाद्यैर्देवतामुक्तविग्रहाम् ।
तारव्याहृतिभिर्हुत्वा मूलमन्त्रेण मन्त्रवित् ॥१८३॥

सर्पिषा पायसेन पञ्चविंशति संख्यया ।
पुनर्व्याहृतिभिर्दत्त्वा गन्धाद्यैः पुनरर्चयेत् ॥१८४॥

तां योजयित्वा पीठस्थां मूर्तौ वह्निं विसर्जयेत् ।
अवशिष्टेन हविषा विकिरेत् परितो बलिम् ॥१८५॥

देवतायाः पारिषदेभ्यो गन्धपुष्पाक्षतान्वितम् ।
होमाशक्तौ होमसंख्याद्विगुणं जपमाचरेत् ॥१८६॥

यद्यदङ्गं विहीयेत तत्संख्याद्विगुणो जपः ।
इति वाक्यानुसारेण सर्वत्राहुर्मनीषिणः ॥१८७॥

केचिन्नास्माकमत्रार्थे सम्मतिस्तद्वचो यतः ।
पुरस्क्रियाङ्गवैगुण्यप्रवृत्तिं नैव गच्छति ॥१८८॥

अन्यत्रातिप्रङ्गेन न चेन्न नियमो भवेत् ।
नाप्यस्य वचनन्यायसङ्कोचो निष्प्रमाणकः ॥१८९॥

प्रयोगाद्यनुरोधेन तस्यावश्यकतास्थितेः ।
कदापि भूतशुद्ध्यादौ त्वेतच्छिष्टैर्न सम्मतम् ॥१९०॥

न वाच्यं नित्यहोमेऽस्मिन्ननुकल्पस्थलो (लं) भवेत् ।
इष्टापत्तेर्नतस्यास्ति नियमो नित्यकर्मणः ।
तस्मादाचार एवास्य करणे शरणीभवेत् ॥१९१॥

पानीयममृतीकृत्य मुद्रया धेनुसंज्ञया ।
चुल्लुकोदकममृतापिधानमसि ठद्वयम् ॥१९२॥

अनेन देवता हस्ते ततो दत्त्वा मुखोद्भवम् ।
मुखमुद्रासयेत्तेजोजलं दत्त्वा विचिन्तयेत ।
गतसारं च नैवेद्यं ततश्चैतत्समुद्धरेत् ।।१९३।।

उच्छिष्टं तद्भुजे दत्त्वैशान्यां स्थानं विशोधयेत् ।
विष्वक्सेनः स्मृतो विष्णोस्तेजश्चण्डो विवश्वतः ।।१९४।।

चण्डेश्वरी तथा शक्तेः चण्डेशः शङ्करस्य च ।
लम्बोदरो गणपतेरभी उच्छिष्टभोजिनः ।।१९५।।

गण्डूषं दन्तधवनमाचामम्मुखमार्जनम् ।
हस्तानुलेपनं तुण्डवासकं माल्यभूषणम् ।।१९६।।

अर्पयित्वा बुधस्तानि जलदानपुरःसरम् ।
कर्पूरसकलैर्मिश्रं ताम्बूलं च निवेदयेत् ।।१९७।।

चन्दनादि प्रदीपान्तैरुपचारैः पुनर्यजेत् ।
प्रसन्नार्चेयमाख्याता सर्वदेवप्रसादिनी ।
अर्घंदत्त्वा प्रयच्छेत पुष्पाञ्जलिमनन्यधीः ।।१९८।।

पञ्चोपचारैः पूजेयमित्येवमपरे विदुः ।
पूजने पार्षदार्चायां विवदन्तेऽत्र केचन ।।१९९।।

गन्धादिभिः सपरिवारमेतेन क्रमदीपिका ।
वाक्येनैवानुकल्पाः स्युरतो नेह बहूच्यते ।।२००।।

तत्तद्देवं स्तवैः स्तुत्वा प्रदक्षिणमथाचरेत् ।
एकहस्तप्रणामं च एकं वापि प्रदक्षिणम् ।
अकाले दर्शनं विष्णोः हन्ति पुण्यं पुराकृतम् ।।२०१।।

ततः प्रणामं कुर्वीत वस्वङ्गं वा शराङ्गकम् ।
दोर्भ्यां पदाभ्यां जानुभ्यामुरसा वचसा दृशा ।।२०२।।

शिरसा मनसा चेति प्रणामोष्टाङ्ग ईरितः ।
बाहुभ्यां (च)सजानुभ्यां शिरसा वचसा धिया ।
पञ्चाङ्गकः प्रणामः स्यात्पूजासु प्रवराविमौ ।।२०३।।

अथोपचारमुद्राणां लक्षणं सम्यगुच्यते ।
पद्ममुद्रा निगदिता हृत्स्था सैवासने भवेत् ।।२०४।।

ईषन्नम्राङ्गुलिर्दक्षा संयोज्याङ्गुलकं वरम् ।
स्वागतस्वस्तिका मुद्रा मध्यामूलगला(ता)ङ्गुलिः ।२०५।।

स्वस्तिमुद्रा द्विहस्तेन मुद्रा त्वर्घस्य कीर्त्तिता ।
तौ च प्रसारितौ हस्तौ पाद्यमुद्रा समीरिता ।।२०६।।

देशिनीमूलगाङ्गुष्ठा दक्षिणाधः कनीयसी ।
प्रसार्य मध्यमास्तिस्रो मुद्राचामे प्रकीर्त्तिता ।।२०७।।

युक्तावनामिकाङ्गुष्ठौ तिस्रोऽन्याः सम्प्रसारिताः ।
मधुपर्के तु सा मुद्रा संकल्प्य कलसं करे ।।२०८।।

कृत्वा मुष्टिं तथा स्नाने मध्यमाङ्गुष्ठकौ युतौ ।
अन्याःप्रसारितास्तिस्रो मुद्रा वस्त्रस्य कीर्त्तिता ।।२०९।

कनिष्ठाङ्गुष्ठकौ लग्नौ तिस्रो मध्याः प्रसारिताः ।
यज्ञोपवीतमुद्रेयं कथिता वेदपारगैः ।।२१०।।

मधुपर्की समुत्ताना मुद्रालङ्करणी मता ।
मुक्ता निर्नामिकामुष्टिर्गन्धमुद्रेति कीर्तिता ।।२११।।

उत्थिताधोमुखी मध्या बद्धाङ्गुष्ठा यदीतराः ।
पुष्पमुद्रा समाख्याता पुष्पदानविवर्धिनी ।।२१२।।

अङ्गुष्ठस्तर्जनीलग्नास्तिस्रः सङ्कुचितापराः ।
मुद्रा धूपप्रदाने स्याद् देवानां तुष्टिकारिणी ।।२१३।।

उत्ताना पौष्पिकी मुद्रा दीपमुद्रेति कीर्तिता ।
पञ्चाङ्गुल्यग्रसंलग्ना ग्रथितोर्ध्वमुखी यदि ।।२१४।।

त्रिधा निबद्धा मुद्रेयं नैवेद्यस्य प्रकीर्त्तिता ।
द्वौ करौ पृष्ठसंलग्नौ भ्रामयेद्ग्रथिताङ्गुली ।
छोटिकेति समाख्याता प्रणामे तां विनिर्दिशेत् ।।२१५।।

---

अथातो विष्णुपूजायां विबुधश्चुलुकोदकैः ।
ब्रह्मार्पणाख्यमनुना कुर्याद्ब्रह्मार्पणक्रियाम् ।।१।।

प्राणायामत्रयं कुर्यात् पुरतः परतो जपे ।
मनः संयमनः शुद्धो मौनी मन्त्रानु चिन्तनः ।
अव्यग्रचित्तो निर्दोषो देवतां समनुस्मरन् ।।२।।

सूर्यादिसन्निधौकुर्याज्जपं साधकसत्तमः ।
सर्वसिद्ध्यै तथा चाह मन्त्रदेवप्रकाशिका ।।३।।

सूर्यस्याग्रे गुरोरिन्दोर्दीपस्य च जलस्य च ।
विप्राणां च गवां चैव सन्निधौ सम्मुखोजपेत् ।।४।।

यथाशक्त्या जपं कृत्वा तं जपं सर्वसिद्धये ।
दक्षिणे देवता हस्ते मनुनानेन चार्पयेत् ।।५।।

गुह्यातिगुह्यगोप्त्री त्वं गृहाणास्मत्कृतं जपम् ।
सिद्धिर्भवतु मे मातस्त्वं गतिः परमेश्वरि ।।६।।

अयं शाक्ते मनौ मन्त्रो वैष्णवादावथोहयेत् ।
सुछत्रचामरै राज्ञामुपचारैः प्रतोषयेत् ।।७।।

उपचारेषु सर्वेषु यत्किंचिद्दुर्लभं भवेत् ।
तत्सर्वं मनसा ध्यात्वा पुष्पक्षेपेण कल्पयेत् ।।८।।

यत्वो (द्वो) पचारवस्तूनामभावे जलमर्पयेत् ।
तोयेन विमलेनैव पूर्णतेत्याह नारदः ।।९।।

पुष्पाञ्जलिं पुनर्दत्त्वा साष्टाङ्गं प्रणमेद्बुधः ।
तत्तद्देवस्तवैः स्तुत्वा तं तं देवं यथाविधि ।।१०।।

अथ सम्प्रार्थयेदेनां मन्त्री प्रार्थनमुद्रया ।
अज्ञानाद्वा प्रमादाद्वा वैकल्यात् साधनस्य च ।
यन्न्यूनमतिरिक्तं च तत्सर्वं क्षन्तुमर्हसि ।।११।।

द्रव्यहीनं क्रियाहीनं श्रद्धामन्त्रविवर्जितम् ।
तत्सर्वं कृपया तावत् क्षमस्व त्वं दयानिधे ।।१२।।

यन्मया क्रियते कर्मं जाग्रत्स्वप्नसुषुप्तिषु ।
तत्सर्वं तावकी पूजा भूयाद्भूत्यै च मे प्रभो ।।१३।।

यन्मया क्रियते कर्म सुमहत् स्वल्पमेव वा ।
तत्सर्वं करुणाहेतोः क्षन्तव्यमयमञ्जलिः ।।१४।।

उत्थायासनमारुह्य तन्मूर्त्तावुपसंहरेत् ।
परिवारगणं सर्वमुपसंहारमुद्रया ।।१५।।

अधोमुखे वामहस्ते उर्ध्वास्यं दक्षहस्तकम् ।
क्षिप्त्वाङ्गुलीरङ्गुलिभिः संयोज्य परिवर्तयेत् ।।१६।।

एषा संहारमुद्रास्याद्विसर्जन विधौ मता ।
क्षमस्वेति वदन्मूल मन्त्रेण व्यापकं त्रिशः ।।१७।।

विधाय देवतां पश्चात्स्वीयहृत्सरसीरुहे ।
सुषुम्नावर्त्मना पुष्पमाघ्रायोद्वासयेत्सुधीः ।।१८।।

शिष्टं गन्धं शंखतोये दत्त्वालोड्य चन्दनेन च ।
पाणौ कृत्वा सप्तवारं मन्त्रं मूलं जपेत्सुधीः ।।१९।।

सर्वतीर्थकृतं ध्यात्वा स्वमङ्गंप्रोक्षयेद्बुधः ।
देवार्चनावशिष्टं यत् सलिलं शङ्खमध्यगम् ।।२०।।

अङ्गे लग्नं मनुष्याणां ब्रह्महत्यां व्यपोहति ।
निर्माल्यं मस्तके धार्यं सर्वाङ्गे चानुलेपनम् ।।२१।।

नैवेद्यं चोपभुञ्जीत दत्त्वा तद्भक्तिशालिने ।
गन्धाद्यैर्मानसैरिष्ट्वा ऋष्यादिन्यासपूर्वकम् ।।२२।।

ध्यात्वेष्टदेवतारूपमात्मानं प्रजपेन्मनुम् ।
शास्त्रदृष्टेन विधिना भक्तिमान् स्थिरमानसः ।।२३।।

संख्या पूर्तौ पुनः कुर्याद्दृष्यादिप्राणसंयमान् ।
इत्याहोद्वासनस्यान्ते पुरश्चरण चन्द्रिका ।।२४।।

विधिदृष्टं च यत्कर्म करोत्यविधिना नरः ।
फलं न किञ्चिदाप्नोति क्लेशमात्रं हि तस्य तत् ।।२५।।

श्रद्धाभक्तिसमायुक्तं यत्कर्म क्रियते नृभिः ।
सुविशुद्धेन भावेन तदानन्त्याय कल्पते ।।२६।।

विधिहीनं भावदुष्टं कृतमश्रद्धया च यत् ।
तद्गृह्णन्त्यसुरास्तस्य गू (मू)ढस्य दुष्कृतात्मनः ।।२७।।

पूजाकर्मविशेषेण दशकालानुरोधतः ।
यथाशक्ति यथान्यायं यथालोकाविगर्हितम् ।।२८।।

स्वस्थः समर्थः कुर्वीत उत्तमैरेव साधनैः ।
मध्यमो मध्यमैरेव न्यूनो हीनैः समाचरेत् ।।२९।।

अग्निकार्येण हविषा भूषणैश्च समन्वितम् ।
द्रव्यशुद्धिसमायुक्तमुत्तमं पूजनं भवेत् ।।३०।।

अग्निकार्यं विहीनं तु कालसर्गं निवेदयेत् ।
उपचारैर्युतं सर्वं मध्यमं पूजनं भवेत् ।।३१।।

वस्त्रालङ्कारशोभादि वर्जयित्वा पृथग्विधम् ।
केवलं पुष्पयागं तु कनिष्ठं पूजनं हि तत् ।।३२।।

एतत्कर्तुं न शक्नोति साधको यदि पूजनम् ।
तदा हि देवतामात्रं ध्यात्वा सम्यक् प्रपूजयेत् ।।३३।।

अथवा मानसीं कुर्यादात्मपूजामथापि वा ।
अथवा केवलां बाह्यां पूजां कुर्याद्विचक्षणः ।।३४।।

अर्चामात्रासमर्थस्तु दद्यादर्चनसाधनम् ।
यो दातुं नापि शक्नोति कुर्यादर्चनदर्शनम् ।।३५।।

पूर्वपूर्वस्य चाशक्तौ उत्तरोत्तरमाश्रयेत् ।
यद्येतदन्यथा कुर्यात्तदनिष्टफलं श्रुतौ ।।३६।।

प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्त्तते ।
न साम्परायिकं तस्य दुर्मतेर्जायते फलम् ।।३७।।

नैकं च विद्यते यस्य सोऽधो याति न संशयः ।
एवं यत् केन चित्प्रोक्तमकृत्वामानसार्चनम् ।।३८।।

देवताभावजनकं न बाह्ये देवमर्चयेत् ।
बाल प्रलपितं त्वेतन्न(वा)तद्दैवतात्मताम् ।।३९।।

सम्पादयेत् कलान्यासावसानेनैव कर्मणा ।
तत्सिद्धेरिति हि प्रोक्तं विन्यासे मातृका मनोः ।।४०।।

विशेषं सूतके त्वाह तत्त्वसागरसंहिता ।
अथ सूतकिनः पूजां वक्ष्याभ्यागमबोधिताम् ।।४१।।

स्नात्वा नित्यं च निर्वर्त्य मानस्या क्रियया परम् ।
बाह्यपूजाक्रमेणैव ध्यानयोगेन पूजयेत् ।।४२।।

यदि कामी न चेत् कामी नित्यकर्मवदाचरेत् ।
नियमव्यतिरेकेण यः कुर्याद्देवतार्चनम् ।।४३।।

किञ्चिदप्यस्य न फलं भस्मराशौ हुतं यथा ।
योऽर्चयेद्विधिवद्भक्त्या परानीतैश्च साधनैः ।।४४।।

पूजा फलार्धमेवास्य न समग्रं फलं भवेत् ।
यस्तु भक्त्या प्रयत्नेन स्वयं सम्पाद्य चाखिलम् ।
साधनं चार्चयेद्धीमान् स समग्रं फलं लभेत् ।।४५।।

स्वयमानीय चोत्पाद्य पूजोपकरणानि च ।
पूजयेत्तद्वरं ह्येतदुत्तमं प्रार्थितार्थदम् ।।४६।।

कलत्रपुत्रमित्रादितत्तत्सम्पादितं च यत् ।
मध्यमं चार्चनं तेन तैः सार्धं तत्फलं भवेत् ।।४७।।

अन्यैः सम्पाद्य यद्दत्तं क्रयक्रीतं च तेन वा ।
गौणमाराधितं तेन पादमात्रफलं भवेत् ।।४८।।

परारोपितवृक्षेभ्यः पुष्पाण्यानीय चार्चयेत् ।
अविज्ञाप्यैव तं यस्तु निष्फलं तस्य पूजनम् ।।४९।।

विहितं येऽनुतिष्ठन्ति त एव फलभाजनम् ।
सर्वेषामीप्सितार्थानामन्यथा चेत्तथा नहि ।।५०।।

न्यायार्जितैः साधनैश्च दानहोमार्चनादिकम् ।
कुर्यान्नचेदधो याति भक्तया कुर्वन्नपि द्विजः ।।५१।।

इति पूजाविधिः सम्यक् साधारण उदीरितः ।
ततो जपदशांशेन होमं कुर्याद्दिने दिने ।।५२।।

दशांशता पुनस्तेषां क्वचिदेवान्यथा भवेत् ।
अथवा लक्षसंख्यायां पूर्णायां होममाचरेत् ।।५३।।

यद्वा यस्य जपो यावान् तत्पूर्णे होममाचरेत् ।
होमं दशांशतः कुर्यात् स्वाहान्तं मन्त्रमुच्चरन् ।।५४।।

होमकार्येऽग्निजायान्ताः पूजायां ते तनोऽन्तकाः ।
मन्त्रेणोङ्कारपूतेन स्वाहान्तेन विचक्षणः ।।५५।।

स्वाहावसाने जुहुयाद्ध्यायन् वै मन्त्रदेवताम् ।
इत्यादिवाक्यैः सर्वेषु स्वाहान्तत्वं व्यवस्थितम् ।।५६।।

स्वाहान्तेऽपि मनौ स्वाहां पुनरुच्चारयेदिदम् ।
केषां चिन्मतमज्ञानगाढान्तध्वन्तिसङ्गतम् ।।५७।।

नमः स्वाहा स्वधा वौषट्वषटां विनिवेदने ।
विनियोगो भवेदेतदेकयैव किमन्यया ।।५८।।

मन्त्रस्तदन्त इत्येतदन्ते तदिति बोधकम् ।
अदृष्टार्थकतापत्तावन्यथा गौरवं भवेत् ।।५९।।

अग्नौ करणहोमेऽपि छन्दोगाचारसंमतः ।
अत एव विना स्वाहामतिरिक्तां समर्थितः ।।६०।।

नमः पदादावप्येवं बुद्धिमानवधारयेत् ।
शिष्टाचार विशिष्टं च वाक्यमप्यनुपठ्यते ।।६१।।

वाक् च कामश्च शक्तिश्च प्रणवः श्रीश्च कथ्यते ।
एतदाद्येषु मन्त्रेषु प्रणवं नैव योजयेत् ।।६२।।
ठद्वयान्ते ठद्वयं न नमोऽन्ते न नमो वदेत् ।।६३।।

---

अथ होम वधिं वक्ष्ये सर्वतन्त्रानुसारतः ।
कल्पानपि समालोक्य संहिताः शारदादिकम् ।।१।।

चतुरस्रादिके कुण्डे होमं कुर्याद्विधानतः ।
सर्वार्थप्राप्तये मन्त्री तद्विधानं प्रवक्ष्यते । २।।

नित्यं नैमित्तिकं होमं स्थण्डिले वा समाचरेत् ।
यद्यपि स्थण्डिले काम्यहोमस्य न विधिः क्वचित् ।।३।।

तथाप्यस्यानिषिद्धत्वाद् व्यवहारानुरोधतः ।
काम्योऽपि होमः कर्त्तव्यः साधकैस्तत्र कुत्रचित् ।।४।।

होमकृच्चरणौ सम्यक् प्रक्षाल्याचम्य बोधिते ।
आस्यासने च गुर्वादीन्नत्वा भूतविशोधनम् ।।५।।

कृत्वा तु मातृकान्यासं तत्तत्कल्पप्रकाशितम् ।
तत्त्वन्यासादिकं कृत्वा तथैव प्राणसंयमम् ।।६।।

स्थानं संस्कृत्य तन्मत्री कुण्डं वा स्थण्डिलं चरेत् ।
एकहस्तं प्रकुर्वीत चतुरङ्गुलमुच्छ्रितम् ।।७।।

अरत्निमात्रमानं वाङ्गुष्ठपर्वसमुच्छ्रितम् ।
सुशोभनं वालुकाभिश्चतुरस्रं समन्ततः ।।८।।

संस्कुर्याद्वाच्यविधिना यद्वा तद्वीक्षणादिभिः ।
वीक्षणं मूलमन्त्रेण शरेण प्रोक्षणं मतम् ।।९।।

तेनैव ताडनं दर्भैर्वर्मणाऽभ्युक्षणं मतम् ।
तिस्रस्तिस्रो लिखेल्लेखा हृदा प्रागुदगग्रगाः ।।१०।।

प्रागग्राणां स्मृता देवा मुकुन्देशपुरन्दराः ।
रेखाणामुदगग्राणां ब्रह्मवैवस्वतेन्दवः ।।११।।

पक्ष प्राप्तपरं वाक्यं लिखेच्छाखानुसारतः ।
लिखेद्रेखाः स्वशाखोक्ता इति यल्लघुदीपिका ।।१२।।

प्रपञ्चसारेऽप्यत्रोक्तं स्वशाखानुगता लिखेत् ।
दर्भद्वयं तु बर्हिः स्यात्तेनेदमिति कश्चन ।।१३।।

अथवा षट्कोणवृतं त्रिकोणं तत्र संलिखेत् ।
बाह्ये सकेसरं त्वष्टदलं पद्मं ततो बहिः ।।१४।।

चतुरस्रं चतुर्द्वारमु(यु)क्तं कृत्वा तदन्तरम् ।
त्रिकोणे शक्तिमालिख्य मध्ये साधकसत्तमः ।।१५।।

कर्मयोग्यान् भूतरत्नान् साध्यनामाक्षराणि च ।
विदर्भितानि मन्त्रार्णैः शक्तिबीजाभितो लिखेत् ।।१६।।

मेखलासु तथा मन्त्री चक्राद्यर्णान् यथाविधि ।
सहस्रारपदं पूर्वं कौमोदकि ततो भवेत् ।।१७।।

महाशङ्खपदं पश्चान् महाशङ्खपदं ततः ।
प्रोक्तानि वर्मास्त्रान्तानि निजमन्त्राणि वै क्रमात् ।।१८।।

पूर्वं महापाञ्चजन्यं महाहलमनन्तरम् ।
ततो महामुशलकं महाशूलं ततः परम् ।।१९।।

स्वाहान्तानि च मन्त्राणि शङ्खादीनां क्रमाद्विदुः ।
चक्रादयस्तु दिक्संस्थाः शङ्खाद्याःकोणसंस्थिताः ।।२०।।

तारेण प्रोक्षयेत्पश्चात् साधनं हविरादिकम् ।
सर्वं वागीश्वरीपीठं ततो मन्त्री प्रपूजयेत् ।।२१।।

आधारशक्तिमारभ्य पीठमन्त्रान्तमादरात् ।
वक्ष्यामि भुवनेश्वर्याः शक्तीः पीठमनुं तथा ।।२२।।

जयाख्या विजया पश्चादजिता चापराजिता ।
नित्या विलासिनी दोग्ध्री अघोरा मङ्गला नव ।।२३।।

वागीश्वरीश्वरयोर्योगपीठात्मने नमः ।
ह्रीमाद्यः पीठमन्त्रोऽयमावाह्यास्मिन् प्रपूजयेत् ।।२४।।

वागीश्वरीमृतुस्नातां नीलेन्दीवरधारिणीम् ।
वागीश्वरेणसहितामुपचारैरनुक्रमात् ।।२५।।

ततो वागीश्वरीदेहं चिन्तयेत्तद्विधानवित् ।
यच्चोक्तं तत्त्वसागर संहितादिषु पूजयेत् ।।२६।।

लक्ष्मीमृतुमतीं तत्र प्रभोर्नारायणस्य च ।
ग्राम्यधर्मेण संजातमाग्नि तत्र विचिन्तयेत् ।।२७।।

अवगच्छेद्विशेषे तत्तदुपचारैरनुक्रमात् ।
सूर्यकान्तादिसम्भूतं यद्वा श्रोत्रियगेहजम् ।।२८।।

आनीय वह्निं पात्रेण कांस्यादिरचितेन च ।
अस्त्रेण किञ्चिदङ्गारमादाय कवचाणुना ।।२९।।

क्रव्यादांशं त्यजेत्तस्मान्मन्त्री सर्वार्थसिद्धये ।
क्रव्यादांशं त्यजामीति केचित्त्यागमिहोचिरे ।।३०।।

अवशिष्टं तु संस्कुर्या च्चतुर्भिर्वीक्षणादिभिः ।
औदर्यवैन्दवाग्निभ्यामैक्यं संभावयनवसोः ।।३१।।

रमित्यनेन बीजेन चैतन्यं योजयेद्वसौ ।
ओङ्कारमन्त्रितं मन्त्री धेनुमुद्रामृतीकृतम् ।।३२।।

रक्षितं शरमन्त्रेण वर्ममन्त्रावगुण्ठितम् ।
अर्चितं त्रिः परिभ्राम्य प्रदक्षिणमतन्द्रितः ।।३३।।

प्रणवस्य यथान्यायमुच्चारणपुरस्सरम् ।
आत्मनोऽभिमुखं वह्निं जानुस्पृष्टमहीतलः ।।३४।।

वागीश्वर्याः सकामायाः स्वपन्त्याः शिवसन्निधौ ।
शिववीर्यधिया देव्या योनावेनं विनिःक्षिपेत् ।।३५।।

प्रादेशसंमितां मन्त्री समिधं घृतसंप्लुताम् ।
अग्नौ निःक्षिप्य विधिवद्दग्ध्वास्मिन् होमकर्मणि ।।३६।।

कृताकृतावेक्षकस्त्वमत्र ब्रह्मा भवेत्यपि ।
अभिधायासने मन्त्री वह्नेर्दक्षिणतः कुशे ।।३७।।

कमण्डलुं चोत्तरीयं कौशेयं बटुकं तथा ।
ब्रह्माणं कल्पयेदेतान्यशक्तौ साधकोत्तमः ।।३८।।

शक्तौ तु वृणुयादेव ब्राह्मणं ब्रह्मकर्मणि ।
पुष्पचन्दनताम्बूलसहितं वाससां त्रयम् ।।३९।।

अलङ्करणमित्यहुर्बुधा वरणसंभृतिम् ।
मौथुनान्तधिया ताभ्यां दद्यादाचमनीयकम् ॥४०॥

दीपिकादौ तु संप्रोक्तमिह कङ्कणबन्धनम् ।
अस्त्रेण वह्नि सम्प्रोक्ष्य योनिमाच्छाद्य सत्कुशैः ॥४१॥

दिक्षु काण्ड पुटं न्यस्येदस्त्रमन्त्रेण साधकः ।
तेनैव गर्भरक्षार्थं मूलमन्त्राभिमन्त्रितम् ॥४२॥

कौतुकं तु निबध्नीयाद्दर्भकङ्कणकं करे ।
रक्षार्थं गर्भिणीं शक्ति रक्ष रक्षेति चोच्चरन् ॥४३॥

दर्शयेज्ज्वालिनीं मुद्रामिति रत्नावलीमतम् ।
तस्यास्तु लक्षणं प्रोक्तं तत्रैव तदिहोच्यते ॥४४॥

मणिबन्धौ समौ कृत्वा करौ प्रविततांगुली ।
मध्यमे मिलिते कृत्वा तन्मध्येऽङ्गुष्ठकौ क्षिपेत् ॥४५॥

वह्नि संदीपयेन्मुद्रा ज्वालिन्युद्दीपिका मता ।
ज्वालयेन्मनुनानेन तमग्निमथ साधकः ॥४६॥

चित्पिङ्गल हल दह पचयुग्मान्युदीर्यच ।
सर्वज्ञाज्ञापय स्वाहा मन्त्रः पावकवल्लभः[१] ॥४७॥

जूहूषंश्च हुते चैव पाणिशूर्पास्यदारुभिः ।
न कुर्यादग्निधमनं कुर्याच्च व्यजनादिना ॥४८॥

मुखेनैव धमेदग्निं मुखादेषोऽध्यजायत ।
न मुखेनेति यच्चोक्तं लौकिके योजयन्ति तत् ॥४९॥

सप्तजिह्वाह्वयां मुद्रां ततो मन्त्री प्रदर्शयेत् ।
अग्नि प्रज्वलितं वन्दे जातवेदं हुताशनम् ॥५०॥

सुवर्णवर्णमनलं समिद्धं विश्वतोमुखम् ।
अनेनाग्निमुपस्थाय त्रिविधा रसना वसोः ॥५१॥

विन्यसेदात्मनो देहे वक्ष्यमाणा विधानवित् ।
लिङ्ग पायुशिरोवक्र प्राणनेत्रेषु सर्वतः ॥५२॥

वह्निरर्धांशसंयुक्ताः सादियान्ताः सबिन्दवः ।
वर्णा मन्त्राः समुद्दिष्टा जिह्वानां सप्त च क्रमात् ॥५३॥

---

१. चित्पिङ्गल हल दह पच पच सर्वज्ञाज्ञापय स्वाहा ।

पद्मरागा सुवर्णान्या तृतोया भद्रलोहिता ।
लोहिता च ततःश्वेता धूमिनी च करालिका ॥५४॥

राजस्यो रसना वह्नेर्विहिता वश्यकर्मणि ।
हिरण्या गगना रक्ता कृष्णान्या सुप्रभा मता ॥५५॥

बहुरूपा चातिरक्ता सात्त्विक्यो रसनाः स्मृताः ।
विश्वमूर्तिस्फुलिङ्गिन्यो धूम्रवर्णा मनोजवा ॥५६॥

लोहिता च करालाख्या काली तामसजिह्विकाः ।
सात्विक्यो दिव्यपूजासु राजस्यः काम्यकर्मसु ॥५७॥

तामस्यः क्रूरकार्येषु प्रयोक्तव्या विपश्चिता ।
सुराः सपितृगन्धर्वयक्षनागपिशाचकाः ॥५८॥

राक्षसाश्च क्रमादग्नेराश्रिता रसनास्वमी ।
वह्नेः कराङ्गविन्यासावेभिर्मन्त्रैर्यथा पुरा ॥५९॥

सहस्रार्चिः स्वस्तिपूर्ण उत्तिष्ठपुरुषस्ततः ।
धूमव्यापी सप्तजिह्वो धनुर्धर इतीरिताः ॥६०॥

न्यस्तव्या जातिसंयुक्ता अङ्गमन्त्रा यथाक्रमात् ।
मूर्तीरष्टौ तनौ तद्वदात्मनो जातवेदसः ॥६१॥

मूर्धाङ्गपार्श्वकट्यन्धुकटिपार्श्वांसकेषु च ।
प्रक्षिणक्रमान्न्यस्येदुच्यन्ते ता यथा क्रमात् ॥६२॥

जातवेदाः सप्तजिह्वो हव्यवाहनसंज्ञकः ।
अश्वोदरज संज्ञोऽन्यस्तथा वैश्वानराह्वयः ॥६३॥

कौमारतेजाः स्याद्विश्वमुखो देवमुखस्तथा ।
ताराग्नये पदाद्याः स्युर्नमोऽन्ता वह्निमूर्तयः ॥६४॥

आधारशक्तिमारभ्य वह्निमण्डलकावधि ।
पीठं सम्पूजयेन्मन्त्री नवशक्ति समन्वितम् ॥६५॥

पीता श्वेताऽरुणा कृष्णा पृषातीव्रास्फुलिङ्गिनी ।
रुचिरा ज्वालिनी प्रोक्ताः कृशानोर्नवशक्तयः ॥६६॥

बीजेनैवासनं दत्त्वा मूर्ति मूलेन कल्पयेत् ।
वरशक्तिस्वस्त्यभीतीर्दधानं करपल्लवैः ॥६७॥

हैमाकल्पं जवाकान्ति पद्मसंस्थं त्रिलोचनम् ।
जिह्वाभिर्वक्ष्यमाणाभिर्युक्तं कर्मसु तं क्रमात् ।।६८।।

बद्धमौलिजटाजूटैरेवं ध्याये द्विधानवित् ।
हेमवर्णा हिरण्ये शे कृष्णा रक्षसि नीलरुक् ।।६९।।

वैदूर्यवर्णा कनका प्राच्यां रक्ता कृशानुगा ।
तरुणार्कप्रभा पद्मरागप्रख्या जले स्थिता ।।७०।।

सुप्रभा वागुभागेतिरक्तिका रजनप्रभा ।
यथार्था बहुरूपा च दक्षोत्तरनिवासिनी ।।७१।।

कुण्डमध्ये प्रशस्ता सा फलमेषां प्रचक्षते ।
हिरण्याऽऽकर्षणादौ स्यात् कनका स्तम्भनादिषु ।।७२।।

द्वेषणादौ मता रक्ता कृष्णा मारणकर्मणि ।
सुप्रभा गदिता शान्ता तूच्चाटे चातिरक्तिका ।।७३।।

बहुरूपोत्तरे सिद्धिमृद्धिं दक्षिणतस्तथा ।
सा शुभानि सदा मध्ये तनोतीति न संशयः ।।७४।।

परिषिञ्चेत्ततस्तोयैर्विशुद्धैर्मेखलोपरि ।
दर्भैरगर्भैर्मध्यस्थमेखलायां परिस्तरेत् ।।७५।।

परिस्तरणकार्ये हि त्यजेद्गोपुच्छमीषिकाम् ।
तदुक्तं भट्टनागेन त्रिपुरासारसंग्रहे ।।७६।।

गोपुच्छमीषिकां त्यक्त्वा तृणमन्यत् परिस्तरेत् ।
निःक्षिपेद्दिक्षु परिधीन् प्राचीवर्जं विचक्षणः ।।७७।।

प्रादक्षिण्येन सम्पूज्यास्तेषु ब्रह्मादयस्त्रयः ।
एकवृक्षसमुद्भूतानार्द्रानतिऋजून् शुभान् ।।७८।।

दोर्मातान् मेखलातुल्यमानान् वा खदिरोद्भवान् ।
औदुम्बरान्वा गृह्णीयात् पूर्वाभावे परं परम् ।।७९।।

ध्यातं वह्निं यजेन्मध्ये वह्निमन्त्रेण साधकः ।
मध्ये षट्सु च कोणेषु जिह्वा बीजादिका यजेत् ।।८०।।

केसरेषूक्तमार्गेण पूजयेदङ्गदेवताः ।
दलेषु पूजयेन्मूर्त्तीः शक्तिस्वस्तिकधारिणीः ।।८१।।

लोकपालांस्ततो दिक्षु तदस्त्राणि ततो बहिः ।
पश्चादादाय पाणिभ्यां स्रुक्सु(स्रु)वौ तावधोमुखौ ।८२।

त्रिशः प्रतप्य दहने दर्भानादाय साधकः ।
तदग्रमूलमध्यानि शोधयेत्तैर्यथाक्रमम् ।।८३।।

गृहीत्वा वामहस्तेन प्रोक्षयेद्दक्षिणेन तौ ।
पुनः प्रतापयेन्मन्त्री दर्भानग्नौ विनिःक्षिपेत् ।।८४।।

आत्मनो दक्षिणे भागे स्थापयेत्तौ कुशान्तरे ।
आज्यस्थालीमथादाय प्रोक्षयेदस्त्रवारिणा ।।८५।।

प्रादेशमात्रे पात्रे द्वे पवित्रे तत्र निःक्षिपेत् ।
तस्यामाज्यं विनिःक्षिप्य संस्कृतं वोक्षणादिभिः ।।८६।।

उद्धृत्य वायवेऽङ्गारान् हृदा तत्र विनिःक्षिपेत् ।
इदं तापनमुद्दिष्टं साधकैस्तन्त्रकोविदैः ।।८७।।

सन्दीप्य दर्भयुगलमाज्ये क्षिप्त्वानले क्षिपेत् ।
बुधो हृदयमन्त्रेण पवित्रीकरणं त्विदम् ।।८८।।

दीप्तेन दर्भयुग्मेन नीराज्याज्यं सवर्मणा ।
अग्नौ विसर्जयेद्दर्भमभिद्योतनमीरितम् ।।८९।।

घृते प्रज्वालितान् दर्भान् प्रदर्श्यास्त्रानुना ततः ।
जातवेदसि तान्न्यस्येत् प्रद्योतनमिदं मतम् ।।९०।।

गृहीत्वा घृतमङ्गारान् प्रक्षिप्याग्नौ जलं स्पृशेत् ।
अङ्गुष्ठोपकनिष्ठाभ्यां दर्भौ प्रादेश सम्मितौ ।।९१।।

धृत्वोत्पुनीयादस्त्रेण घृतमुत्पवनं मतम् ।
तद्वद्धृदयमन्त्रेण कुशाभ्यामात्मसंमुखम् ।।९२।।

घृते सम्प्लवनं कुर्यात् संस्काराः षडुदीरिताः ।
प्रादेशमात्रं सग्रन्थि दर्भयुग्मं घृतान्तरे ।।९३।।

निःक्षिप्य भागौ द्वौ कृत्वा पक्षे शुक्लेतरे स्मरेत् ।
वामे नाडीमिडां भागे दक्षिणे पिङ्गलां ततः ।।९४।।

सुषुम्नां मध्यतो ध्यात्वा कुर्याद्धोमं विधानतः ।
स्रुवेण दक्षिणाद्भागादादायाज्यं हृदा बुधः ।।९५।।

जुहुयादग्नये स्वाहेत्यग्नेर्दक्षिणलोचने ।
वामतस्तद्वदादाय वामे वह्नित्रिलोचने ॥९६॥

जुहुयादथ सोमाय स्वाहेति हृदयानुना ।
मध्यादाज्यं समादाय वह्नेर्भालविलोचने ॥९७॥

जुहुयादग्नि सोमाभ्यां स्वाहेति च न वैष्णवे ।
वह्नौ त्रिनेत्रसद्भावो विद्यते नृहरिं विना ॥९८॥

केचित्तु वैष्णवेऽप्येतामाहुतिं सर्वतो विदुः ।
न हि वह्नेस्त्रिनेत्रत्वं देवतापेक्षमुच्यते ॥९९॥

तथासत्यन्यमन्त्रेण कथमेषाहुतिर्भवेत् ।
हृन्मन्त्रेण स्रुवेणाज्यं भागादादाय दक्षिणात् ॥१००॥

जुहुयादग्नये स्विष्टकृते स्वाहेति तन्मुखे ।
हेति सम्पातयेद् भागेष्वाज्यस्याद्वा (द्या) हुतिक्रमात् ।१०१।

श्री सोमशम्भुनाप्येतदुक्तं शैवागमान्तरे ।
क्रमाद्भागत्रयादाज्यं स्रुवेणादाय साधकः ॥१०२॥

स्वेत्यग्नौ हेति तद्भागे शेषमाज्यं क्षिपेत्क्रमात् ।
इत्यग्निवक्त्रनेत्राणां कुर्यादुद्घाटनं बुधः ॥१०३॥

मध्यप्राग्याम्यवरुणोदीच्यभागान्विचिन्तयेत् ।
ईशतत्पुरुषाघोरसद्योवामस्वरूपिणः ॥१०४॥

होमकालेऽग्निमूर्त्तौ तु ध्यात्वा होमो विधीयते ।
पश्चिमे वदने मन्त्री नित्यहोमं समाचरेत् ॥१०५॥

वश्याकर्षणसौभाग्यपुष्ट्यादौ साधकोत्तमः ।
शान्तिके पाकशुद्धौ च वामे होमं समाचरेत् ।१०६॥

निस्त्रिंशापादनादौ तु तथैव विजिगीषया ।
इष्टसञ्जननार्थं तु प्राचीनवदने यजेत् ॥१०७॥

मारणोच्चाटनद्वेषस्तम्भनार्थं च दक्षिणे ।
प्रायश्चित्तं तु तत्रैव पञ्चमे तु विमुक्तये ॥१०८॥

मन्त्रमुक्तावली ग्रन्थे सम्प्रोक्तं भागकल्पनम् ।
सताराभिर्व्याहृतिभिराज्येन जुहुयात्ततः ॥१०९॥

जुहुयादग्निमन्त्रेण त्रिवारं साधकोत्तमः ।
गर्भाधानादिका वह्नेः क्रिया निर्वर्त्तयेत्क्रमात् ।।११०।।

अष्टाभिराज्याहुतिभिः प्रणवेन पृथक् पृथक् ।
ज्ञानार्णवे तु मूलेन गर्भाधानादिकाः क्रियाः ।।१११।।

मन्त्रमुक्तावलीग्रन्थेऽप्येमेव प्रकीर्त्तितम् ।
हृदा सप्ताहुतीर्दत्त्वा गर्भाधानादिकाः क्रियाः ।।११२।।

प्रत्येकं कारयेदेवमाहुः केचन मान्त्रिकाः ।
गर्भाधानं पुंसवनं सीमन्तोन्नयनं ततः ।।११३।।

अनन्तरं जातकर्म स्यान्नामकरणं तथा ।
बर्हिनिष्क्रमणं पश्चादन्नप्राशनमीरितम् ।।११४।।

चूडोपनयने भूयो महानास्यं (म्यं) महाव्रतम् ।
तथो (थौ) पनिषदं पश्चाद् गोदानोद्वाहकौ मृतिः ।११५।

शुभेषु स्युर्विवाहान्ताः क्रियास्ताः क्रूरकर्मसु ।
मरणान्ताः समुद्दिष्टा वह्नेरागमवेदिभिः ।।११६।।

संस्काराः षोडशैवेति प्रसिद्धेश्चन्द्रिकाकृता ।
गोदानान्तेत्यतः प्रोक्तंसमावर्तन मुच्यते ।।११७।।

तूर्णयागादिके प्रोक्तो विशेषो नामकर्मणि ।
आज्याहुत्यष्टकैर्दत्त्वा नामकर्म तथैव च ।।११८।।

देशिकस्त्वं हुताशेति मूलमन्त्रेण कल्पयेत् ।
ततश्च पितरौ तस्य संपूज्यात्मनि योजयेत् ।।११९।।

समिधः पञ्च जुहुयान्मूलाग्रे घृतसंप्लुताः ।
श्लेष्मातापिशाचतरुसमुद्भूताः परित्यजेत् ।।१२०।।

तदुक्तं भट्टनागेनाप्यर्थात् सारसमुच्चये ।
श्लेष्मातापिशाचतरुं त्यक्त्वाऽन्येभ्यस्तु तां हरेत् ।।१२१।।

मन्त्रैर्जिह्वाङ्गमूर्त्तीनां क्रमाद्वह्नेर्यथाविधि ।
प्रत्येकं जुहुयादेकामाहुतिं मन्त्रवित्तमः ।।१२२।।

नत्यादीनङ्गमन्त्रांश्च केचिदिच्छन्ति तान्त्रिकाः ।
केचिन्मूलमनोरङ्गमन्त्रांस्तन्त्रार्थवेदिनः ।।१२३।।

अर्घादिकं तथा होमः परस्परनिदर्शनम् ।
सम्प्रदायोऽत्रशरणं न किञ्चिदवशिष्यते ॥१२४॥

अवदाय स्रुवेणाज्यं चतुः स्रुचि पिधायताम् ।
स्रुवेण तिष्ठन्नेवाग्नौ साधको यतमानसः ॥१२५॥

जुहुयाद्वह्निमन्त्रेण वौषडन्तेन सम्पदे ।
विघ्नेश्वरस्य मन्त्रेण जुहुयादाहुतीर्दश ॥१२६॥

व्यस्तेन च समस्तेन चतस्रो जुहुयात्ततः ।
सामान्यं सर्वमन्त्राणामेतदग्निमुखं मतम् ॥१२७॥

अथाभ्यर्च्येष्टमन्त्रस्य पीठं वह्नौ सशक्तिकम् ।
अर्चयेदग्निरूपां तां देवतामिष्टदायिनीम् ॥१२८॥

तन्मुखे जुहुयान्मन्त्री पञ्चविंशति संख्यया ।
आज्येन मूलमन्त्रैण वक्त्रैकीकरणंस्मृतम् ॥१२९॥

वह्निदैवतयोरैक्यमात्मना सह भावयन् ।
मूलमन्त्रेण जुहुयादाज्येनैकादशाहुतीः ॥१३०॥

नाडोसन्धानमुद्दिष्टमेतदागमवेदिभिः ।
जुहुयादङ्गमुख्यानामाहुतीनामनुक्रमात् ॥१३१॥

एकैकामाहुतिं सम्यक् सर्पिषा साधकोत्तमः ।
ततस्त्रिमधुरोपेतैस्तिलैर्वा कल्पदेशितैः ॥१३२॥

द्रव्यैर्वाऽभीष्टसिद्ध्यर्थं होमं कुर्याद्यथेप्सितम् ।
महाव्याहृतिभिः कुर्यादथ होमं विधानवित् ॥१३३॥

भूर्भुवःस्वर्भूर्भुवःस्वःपूर्वं स्वाहान्तमेव च ।
अग्नये च पृथिव्यै च महते च समन्वितम् ॥१३४॥

चन्द्रमसे नक्षत्रेभ्यो दिग्भ्यश्च महतेन्वितम् ।
महाव्याहृतयस्त्वेताः सर्वशो देवतामयाः ॥१३५॥

शारदायां तु सम्प्रोक्तं ततो व्याहृतिभिर्हुनेत् ।
तत्र व्याहृतिभिः प्रोक्ता महाव्याहृतयो यथा ॥१३६॥

विकल्प एव मन्तव्यो विद्वद्भिः पक्षयोर्द्वयोः ।
स्रुचा पूर्णाहुतिं दद्यान्मूलमन्त्रेण साधकः ॥१३७॥

तस्यास्तु लक्षणं प्रोक्तं पूर्णयागे विशेषतः ।
आज्येन स्रुवमापूर्य तेनापूर्य स्रुचंततः ॥१३८॥

तदूर्ध्वेऽधोमुखं कृत्वा स्रुवमुत्थाय मन्त्रवित् ।
ऋजुकायस्तयोर्मूलं नाभिमूले निधाय च ॥१३९॥

मूलन्नादान्तमुच्चार्य वामपादपुरःसरम् ।
फलपुष्पाक्षतोपेतमविच्छिन्नाज्यधारया ॥१४०॥

कुर्यात्पूर्णाहुतिं मन्त्री परामृतधिया पुनः ।
श्रीसोमशम्भुना प्रोक्तं सम्पूर्णाहुति लक्षणम् ॥१४१॥

घृतेन् स्रुचि पूर्णायां निधायाधोमुखं स्रुवम् ।
स्रुगग्रे पुष्पमारोप्य पश्चाद्वामेन पाणिना ॥१४२॥

पुनः सव्येन तौ धृत्वा शङ्खसन्निभमुद्रया ।
समङ्गतोर्ध्वकायश्च समपादः समन्वितः ॥१४३॥

नाभौ तन्मूलमाधाय स्रुगग्रव्यग्रलोचनः ।
दुर्गादिकारणत्यागाद्विनिःसृत्य सुषुम्नया ॥१४५॥

वामस्थलान्तमानीय तयोर्मूलमतन्द्रितः ।
मूलमन्त्रमतस्योर्ध्वं वौषडन्तं समुद्धरेत् ॥१४६॥

तदग्नौ जुहुयादाज्यं यवसम्मितधारया ।
ब्रह्मार्पणाख्यमनुना पुनरष्टावथाहुतीः ॥१४७॥

जुहुयान्मन्त्रवर्येण कर्मबन्धविमुक्तये ।
इतः सर्वं प्राणबुद्धिदेहधर्माधिकारतः ॥१४८॥

जाग्रत्स्वप्न सुषुप्तीनामन्ते वस्तामुदीरयेत् ।
ततः सुमनसा वाचा कर्मणा च प्रभाषयेत् ॥१४९॥

सहस्ताभ्यां तथा पद्भ्यामुदरेणेति भाषयेत् ।
शिष्णा च यत् स्मृतं चोक्त्वा यदुक्तं यत्कृतं तथा ।१५०।

तत्सर्वमिति संभाष्य वदेद्ब्रह्मार्पणं पदम् ।
भवत्वन्ते द्विचा(ठा)न्तोयं ब्रह्मार्पणमनुर्मतः ॥१५१॥

ततस्तु साङ्गावरणामुद्वास्य स्वेष्टदेवताम् ।
पुनः प्रोक्तविधानेन जिह्वादीनां विभावसोः ॥१५२॥

एकैकामाहुतिं दत्त्वा परिषिच्याद्भिरात्मनि ।
पावकं योजयित्वा स्वे परिधोन् सपरिस्तरान् ॥१५३॥

नैमित्तिके दहेन्मन्त्री नित्ये तु न दहेदिमान् ।
हुते तु देशिक: पश्चान्मण्डले बलिमाहरेत् ॥१५४

नक्षत्राणां सराशीनां सवाराणां यथाक्रमात् ।
दद्याद्बलिं गन्धपुष्पधूपपूर्वकमादरात् ॥१५५॥

ताराणामश्विन्यादीनां राशि: पादाधिकं द्वयम् ।
मेषादिमुक्त्वा नक्षत्रसंज्ञापूर्वमनन्तरम् ॥१५६॥

देवताभ्य: पदं चोक्त्वा दिवानक्तं पदं वदेत् ।
चारिभ्यश्चाथ सर्वेभ्यो भूतेभ्यश्च नमो वदेत् ॥१५७॥

एवं राशौ तु सम्पूर्णे तस्मिंस्तत्र प्रयोजयेत् ।
तथा राश्यधिपानां च ग्रहाणां तत्र तत्र तु ॥१५८॥

सप्तानां करणानां तु दद्यान्मीनाह्वमेषयो: ।
अन्तराले बलिस्त्वेवं सम्प्रोक्तो होमकर्मणि ॥१५९॥

अन्तर्बहिर्विभागेन रचयेद्राशिमण्डलम् ।
वृत्तं चक्रमुशन्त्येके चतुरस्रं च तद्विद: ॥१६०॥

यदि वा वर्तुलाकारा: स्युश्च द्वादशराशय: ।
ते स्यु: पिपोलिकाकारा मातुलुङ्गनिभा अपि ॥१६१॥

चक्रं च चतुरस्रं चे······द्वादश राशय: ।
भवेयु: पङ्कजदलनिभा वा कथिता बुधै: ॥१६२॥

कुज: शुक्रो बुध: सोमो रविर्बुधयुतो भृगु: ।
कुजो बृहस्पतिर्मन्द शनिगोष्पतय: क्रमात् ॥१६३॥

प्रोक्ता राश्यधिपास्त्वेते रूपमेषामिहोच्यते ।
अरुणश्च सितश्चैव हरित: पाटलस्तथा ॥१६४॥

पाण्डुश्चैव विचित्रश्च सितेतर पिशङ्गकौ ।
पिङ्गल:कर्बुरो वभ्रु:मलिनो रुचिभि: क्रमात् ॥१६५॥

वारा: सराह्व: सप्त केत्वन्ता: स्युर्नवग्रहा: ।
ववश्च मानवस्तद्वत् कौलवस्तैत्तिरस्तथा ॥१६६॥

गदश्च वाणिजो विष्टिरुक्तं करणसप्तकम् ।
ततस्तु विधिवन्मन्त्री देवतां परिपूजयेत् ।।१६७।।

ब्राह्मणान्वस्त्रभूषाद्यैरथ सन्तोषयेद्बुधः ।
प्रोक्तमग्निमुखं मन्त्री नित्यहोमेऽपि योजयेत् ।।१६८।।

उत्तानाः केचिदत्राहुर्नित्ये नैष विधिर्भवेत् ।
नित्यात्काम्यविधेर्भेदः सर्वत्रैव हि दृश्यते ।।१६९।।

अपि चास्य विधेर्नित्यकर्तव्यत्वे गतं दिनैः ।
अनेनैव विधानेन किमन्यैः शारदादिके ।।१७०।।

दक्षिणे स्थण्डिलं कृत्वेत्यादि वैशेषिको विधिः ।
शेषाननुज्ञाफलको नातो गर्भादिका क्रिया ।।१७१।।

अत्रास्त्यत्रोच्यते येन कार्या गर्भादिकाः क्रियाः ।
सर्वं होमविधिं चोक्त्वा शेषे यच्छारदादिके ।।१७२।।

नैमित्तिके दहेन्मन्त्री नित्ये तु न दहेदिमान् ।
अदाह एव परिधेर्विशेषः केवलो मतः ।।१७३।।

तावानेव विशेषोऽत्र उभयोरवगम्यते ।
नो चेदन्यः कथं नोक्तो विशेषस्तेन होमयोः ।।१७४।।

संहितायामगस्त्यस्य समस्तविधिशेषतः ।
नित्ये नैमित्तिके काम्येऽप्येतदग्निमुखं मतम् ।।१७५।।

ज्ञानार्णवेऽपि कुर्वीत गर्भाधानादिकाः क्रियाः ।
नित्यहोमं ततः कुर्यात् काम्य होममनन्तरम् ।।१७६।।

इत्यादि नानावाक्यानामनुरोधेन ताः क्रियाः ।
नित्येऽपीत्यवगन्तव्यं यच्च वैशेषिको विधिः ।।१७७।।

[शेषाननुज्ञाफलकः तदयुक्त मितीष्यते ।
विध्यन्तरमिति प्रोक्तं न तु वैशेषिको विधिः] ।।१७८।।

समस्ताग्निमुखप्राप्तावधिकं व्याहृतिद्वयम् ।
आदावन्ते च होमस्य व्याहृत्योर्वा द्वयोः स्वकात् ।।१७९।।

स्थानात् स्थानान्तरं प्रोक्तं वक्त्रैकीकरणं च वा ।
नास्ताञ्च नाडी सन्धानं प्रतिपक्षशिरःस्विदम् ।।१८०।।

वाक्यं विपक्षदण्डः स्यादिति तर्कानुसारिणः ।
अथ संस्कारशब्दस्य वीक्षणादि चतुष्टये ।।१८१।।

तात्पर्यमितिवक्तव्यं लाघवाद्विधिभेदतः ।
मुख्यकल्पः स एवास्तामनुकल्पे द्व(त्व)यं विधिः ।।१८२।।

इति चेदुच्यते नायं वीक्षणादिपरो भवेत् ।
आधानपूर्वकालत्वाद्वीक्षणादेः श्रुतक्रमे ।।१८३।।

मानाभावेन न त्यागो न चाधानपुरःसरम् ।
वीक्षणादिपरं भूयात्तन्मूलान्तरकल्पने ।।१८४।।

गौरवात्संस्कृते वह्नावित्यादिष्वपि कर्मसु ।
काम्येषु तेन निर्वाहादपि चाधानकर्मणः ।।१८५।।

इति कर्तव्यताकांक्षा सामान्ये न निवर्तते ।
प्रकारेणान्यथा तत्र मन्त्रपात्रसमन्वयः ।।१८६।।

पूर्णाहुतिर्वा नो भूयादभिधान विलोकनात् ।
न वा संस्कारशब्दार्थश्चत्वारो वीक्षणादयः ।।१८७।।

एतदग्निमुखं प्रोक्तमिति यच्छारदावचः ।
उक्तं च भट्टनागेनाप्यमुना तु सुसंस्कृते ।।१८८।।

एवं विधादिवचनैरितिशब्दादियोगिभिः ।
तावत्क्रियाकलापस्य तदर्थद्वारबोधनात् ।।१८९।।

अन्यथास्तरणादीनामभावे नित्यहोमके ।
असङ्गतं भवेदेतन्नित्येषु न दहेदिमान् ।।१९०।।

संस्कृत्य विधिवद्विद्वानिति वा युज्यते कथम् ।
तस्मादेतद्वधूमाषमापनेनोपमीयते ।।१९१।।

---

अथ सानत्कुमारीयो होमे संक्षेप उच्यते ।
कथ्यते वह्निसंस्कारः सर्वसाधरणो मया ।।१।।

येन सिध्यन्ति कार्याणि शृणु नारद साम्प्रतम् ।
नित्ये नैमित्तिके काम्ये पुरश्चरणकर्मणि ।।२।।

प्रयोगे देवताप्रीत्यै सर्वत्रायं प्रशस्यते ।
प्राणायामं विधायादौ सामान्यार्घं विधाय च ।।३।।

कुण्डे वा स्थण्डिले वापि मध्यतो विष्टरं न्यसेत् ।
मूलमन्त्रेण संशोध्य संस्कारैर्वीक्षणादिभिः ।।४।।

देवेन सहितां देवीमृतुस्नातां प्रपूजयेत् ।
वह्निं संस्कृत्य विधिना क्षिप्त्वा प्रज्वाल्य बोधयेत् ।।५।।

परिस्तीर्य कुशैर्दिक्षु परिधीनपि विन्यसेत् ।
विष्टरेषु च संपूज्य ब्रह्मादीनग्निमर्चयेत् ।।६।।
स्रुकस्रुवौ शोधयित्वाज्यं शोधयित्वा यथाविधि ।
हुत्वा पञ्च समिधोऽग्नौ घृताहुति चतुष्टयम् ।।७।।

गर्भाधानादिसंस्कारान् कुर्यात्प्रत्येकमष्टभिः ।
आहुतिभिर्घृतैर्हुत्वा यथावत्साधकोत्तमः ।।८।।
एवं वह्निं तु संस्कृत्य मूलमन्त्रं न्यसेत्तनौ ।
ध्यात्वा तद्देवतां वह्नौ विधिना पूजयेदपि ।।९।।

तन्मुखे जुहुयात्प्रोक्तद्रव्यं संख्या यथोदिता ।
हुत्वा दशांशमङ्गेषु दद्यात् पूर्णाहुतिं ततः ।।१०।।

एवं सनत्कुमारोक्तो होमे संक्षेप ईरितः ।
होमाशक्तौ जपस्यैव जपं कुर्युश्चतुर्गुणम् ।।११।।

षड्गुणं वाष्टगुणितं यथासंख्यं द्विजातयः ।
केचित्तु होमसंख्यायाश्चातुर्गुण्यमिहोचिरे ।।१२।।

प्रक्रमन्याय सिद्धत्वाल्लाघवादनुरोधतः ।
संहितादेरशक्तानामित्यादौ दीपिकोदिते ।।१३।।

अत्रोच्यते जपस्यैव चातुर्गुण्यं विधीयते ।
अध्याहारप्रसङ्गेन विशिष्टविधिगौरवात् ।।१४।।

स होमश्चेदेवमादिवाक्य संदंशवैशसात् ।
तेनेह होमे विषये सहोमे कामतेरिता ।।१५।।

न च न्याय विरोधोऽपि हीनाङ्गस्यानुकल्पतः ।
अस्तु वा शक्त्यपेक्षोऽयं विकल्पो होमपक्षतः ।।१६।।

यथा ग्रहादि पूजायां होमसंख्यानुपूर्वतः ।
उत्तरस्येति गुरवोऽप्यमुमर्थमवादिशन् ।।१७।।

होमानुसारतो ज्ञेया तर्पणादेर्दशांशता ।
तस्यैव प्रकृतत्वेन न तु जापदशांशतः ।।१८।।

तर्पणाद्यनुकल्पस्तु द्विगुणादिजपाद्भवेत् ।
होमानुकल्पमात्रं हि दीपिकावाक्यगोचरः ।।१९।।

द्विजस्त्रीणां तु विज्ञेयो द्विजानामहुतो जपः ।
स्वामिन्युक्तो जपः शूद्रे प्रोक्तस्तन्नविशारदैः ।।२०।।

पुरस्क्रियादिसम्प्राप्तेस्तस्य होमाङ्गतास्थितौ ।
स्त्रीशूद्रावपि कुर्यातां होममित्यपचेष्टता ।।२१।।

तयोस्तु होमरहितो य उक्तेत्यादिदीपिका ।
वाक्येन होमरहिते पौरश्चरणके विधौ ।।२२।।

अधिकारावगमतो ह्यन्यथा तद्विशेषणम् ।
नोपाददीतोपादाने तदप्राप्तिः सहोमके ।।२३।।

यदा सहोमस्यैवायं विधिरित्युच्यते तदा ।
तदप्राप्तिरहोमे स्याद्विरोधः प्रकृते भवेत् ।।२४।।

प्रक्रान्ते होमविरहे पुरश्चरणबोधनात् ।
अपि चाम्नायमन्त्राणां साध्ये स्यादधिकारिता ।।२५।।

कुतोऽर्थापत्तिविरहात्पुरश्चरणकर्मणः ।
अन्यथैवोपपत्तेश्च पूजाहोमो (मे) ऽपि सा भवेत् ॥२६॥

न च प्रणवसंयुक्तमन्त्रबाधे तु का गतिः ।
इति वाच्यं विना मन्त्रं न तं पूजा यदा भवेत् ॥२७॥

पुरश्चरणसंप्राप्तौ पूजाप्राप्तिवशात्तदा ।
तत्राधिकार एवास्तु पुरश्चरणकर्मणः ॥२८॥

विनापि होमं संसिद्धिरिति भेदो महान् द्वयोः ।
एवमप्यधिकारः स्याद्यदा होमे तयोर्द्वयोः ॥२९॥

तदा कातीयकल्पेन स्नानं को वारयिष्यति ।
तदिदं मूढविक्रीतगवां रक्षणमुच्यते ॥३०॥

शिष्टाचारविशिष्टं तु वाक्यमत्र पठन्ति च ।
प्रणवस्य जपाद्धोमात् शालग्रामशिलार्चनात् ॥३१॥

ब्राह्मणीगमनाच्चैव शूद्रश्चाण्डालतां व्रजेत् ।
त्रयाणामेव वर्णानां होमे विधिरुदीरितः ॥३२॥

शूद्रस्तु तत्फलाकांक्षी होमात्तु द्विगुणं जपेत् ।
वायवीसंहिताऽप्याह स्फुटमर्थमिमं यथा ॥३३॥

सर्वेषामेव वर्णानां दीक्षा कार्या क्रियावती ।
स्त्रीणां तथैव शूद्राणां प्रशस्येत न हौमिकी ॥३४॥

एवं प्रयोगविध्यादौ यदि क्वाप्यवगम्यते ।
तयोर्होमाधिकारित्वं तदा तत्रास्तु का क्षतिः ॥३५॥

स्वाहोच्चरणवत् कृष्णमन्त्रादौ विधि दर्शनात् ।
अथवा यद्यशक्तिः स्याद्धोमे वा तर्पणेऽपि वा ॥३६॥

तावत्संख्याजपेनैव ब्राह्मणाराधनेन च ।
भवेदङ्ग द्वयेनैव पुरश्चरण कर्म वै ॥३७॥

यद्यदङ्गं विहीयेत तत्संख्याद्विगुणो जपः ।
कर्तव्यः साङ्गसिद्ध्यर्थं तदशक्तेन भक्तितः ॥३८॥

न चेदङ्गं विहीयेत ततो नेष्टमवाप्नुयात् ।
येषां जपे च होमे च संख्या नोक्ता मनीषिभिः ॥३९॥

तेषामष्टसहस्राणि संख्या स्याज्जपहोमयोः ।
संख्यानुक्तौ शतं साष्टं सहस्रं वा दशापि वा ।।४०।।

नारयण्यामिति प्रोक्तं मानं पुरस्क्रियां विना ।
मानं संमोहने प्रोक्तमनुक्ते काम्यकर्मणः ।।४१।।

लक्षं वाप्ययुतं वापि सहस्रं शतमेव वा ।
कर्मणां गौरवान्मन्त्री तत्तद्धोमं समाचरेत् ।।४२।।

तत्त्वसागरे संजप्यात् सहस्रं शतमेव वा ।
अथवा विंशतिं चैतदुक्तं प्रात्यहिके जपे ।।४३।।

षट्सहस्रं सहस्रं वा शतमष्टोत्तरं जपेत् ।
अगस्त्यसंहितायामप्येष वैशेषिको विधिः ।।४४।।

ननु यत्र विशेषस्य विधिर्नास्ति करादिषु ।
दिशां वा नियमो नास्ति न वा प्रह्वादिकल्पनम् ।।४५।।

विशेषविध्यभावेन व्यवहारप्रवर्तनम् ।
कथं स्यादित्यपेक्षायामुच्यते मुनिभाषितम् ।।४६।।

यत्रोपदिश्यते कर्म कर्तुरङ्गं न चोच्यते ।
दक्षिणस्तत्र विज्ञेयः कर्मणां पारगः करः ।।४७।।

यत्र दिङ् नियमो नास्ति जपहोमार्चनादिषु ।
तिस्रस्तत्र दिशः प्रोक्ता ऐन्द्री सौम्यापराजिता ।।४८।।

आसीन ऊर्ध्वः प्रह्वो (वा) नियमो यत्र नेदृशः ।
तदासीनेन कर्तव्यं न प्रह्वेन न तिष्ठता ।।४९।।

होमाद्दशांशतः कुर्यात्तर्पणं देवतामुखे ।
तर्पयेत्तद्दशांशेन विद्यानन्दकृतागमे ।।५०।।

उक्तं विद्याधराचार्यैं रत्नावल्याख्यआगमे ।
तथैव त्रिपुरासारसंग्रहेऽपि प्रकीर्त्तितम् ।।५१।।

नातो जपदशांशेन तर्पणादि विधीयते ।
तर्पणस्य विधिं वक्ष्ये सम्प्रदायानुसारतः ।।५२।।

होमान्ते देवतायाश्च पीठं तोये विचिन्तयेत् ।
तर्पयित्वा जलेनैव पीठमन्त्रान्तमादरात् ।।५३।।

तत्रावह्यार्चयेद्देवं पाद्याद्यैरुदकात्मकैः ।
होमाद्दशांशतो देववदने सलिलैः शुभैः ।।५४।।

तर्पयेद्वक्ष्यमाणेन मनुना यतमानसः ।
तर्पयामि पदं योज्यं मन्त्रान्ते स्वेषु नामसु ।।५५।।

द्वितीयान्तेष्विति बुधैस्तर्पणस्य मनुर्मतः ।
अञ्जलिस्थजलेनैव तर्पणं विदधीत वै ।।५६।।

तर्पणं तज्जले कार्यं तदुक्तं संहितादिषु ।
तर्पयेच्च विधानेन दशांशं शुद्धवारिणा ।।५७।।

पुष्पाक्षतादियुक्तेन जले संपूज्य पूर्ववत् ।
सम्पूर्णायां तु संख्यायां बुधस्त्वेकैकमञ्जलिम् ।।५८।।

अङ्गादि परिवारेभ्यो दत्त्वा देवं विसर्जयेत् ।
आद्येऽपि केचिदिच्छन्ति परिवारस्य तर्पणम् ।।५९।।

मूलमन्त्रं समुच्चार्य तदन्ते देवताभिधाम् ।
द्वितीयान्तामहं पदात्तर्पयामि नमोऽन्ततः ।।६०।।

कैश्चिदेवं मनुःप्रोक्तश्चाङ्गादीनां च कल्पयेत् ।
तर्पणस्य दशांशेन मार्जयेदात्ममूर्धनि ।।६१।।

मार्जनस्य विधिं वक्ष्ये सर्वतन्त्रानुसारतः ।
देवरूपतया ध्यातस्यात्मनो मूर्ध्नि साधकः ।।६२।।

जलक्षेपात्मकं कुर्यादभिषेकं स्वमुद्रया ।
नमोऽन्तं मूलमुच्चार्य कुर्यादिति चिरन्तनाः ।।६३।।

---

येषां मते पञ्चमाङ्गं कर्मणि द्विजभोजनम् ।
तत्प्रकारमतो वक्ष्ये तन्मतस्यानुसारतः ॥१॥

ब्राह्मणामन्त्रणं कृत्वा भक्ष्यं सम्पाद्य षड्रसम् ।
समावाह्यासनं दत्त्वा मूलेनैवेष्टदेवताम् ॥२॥

ध्यात्वा चावाहयेन्मन्त्री ब्राह्मणाङ्गे यथोदिताम् ।
पाद्याद्यै रर्चयेदिष्टदेवतारूपभूसुरान् ॥३॥

भक्ष्यैर्नानारसोपेतैर्भोजयेद्देवताधिया ।
सुभोजितेषु विप्रेषु तत्साङ्गं सफलं भवेत् ॥४॥

विप्राराधनमात्रेण व्यङ्गं साङ्गं भवेद्यतः ।
सर्वथा भोजयेद्विद्वान् कृतसाङ्गार्थसिद्धये ॥५॥

अङ्गहीनं भवेद्यद्यत्कार्यं तन्ने (ष्ट) साधनम् ।
अतो यत्नेन विदुषो भोजयेत् सर्वकर्मसु ॥६॥

यान्यन्यान्यपि कर्माणि हीयन्ते द्विजभोजनैः ।
निरर्थकानि तानि स्युः पथि राज्ञां गजा इव ॥७॥

येषां न कर्मण्यरिष्टं ब्राह्मणानां च भोजनम् ।
परन्तु जपमात्रस्य दशांशादेव चिन्तनम् ॥८॥

ते यथोदितां सद्रूपां देवतां चिन्तयन्त्वथ ।
पुरश्चर्यां विधायेत्थं सम्यक् साधक सत्तमः ॥९॥

तदन्ते महतीं पूजां कुर्याद् ब्राह्मणभोजनम् ।
बहुभिर्वस्त्रभूषाभिः पूजयेद्गुरुमात्मनः ॥१०॥

दीनानाथांश्च सन्तोष्य मन्त्राः सिद्ध्यन्तिमन्त्रिणाम् ॥११॥

---

अथवाल्पधियामेष प्रकारो मन्त्रसिद्धये ।
चन्द्रसूर्योपरागे तु स्नात्वा संयतमानसः ।।१।।

एकं पन्थानमाश्रित्य बुधः प्रोक्तप्रकारयोः ।
कुशाक्षतजलैः कुर्यात् संकल्पं देवतान्ततः ।।२।।

अनन्यचित्तः संपूज्य प्रकारेणाथ केनचित् ।
स्पर्शाद्विमुक्तिपर्यन्तं जपेन्मन्त्रं समाहितः ।।३।।

होमादिकं ततः कुर्याद्यथाविधि यथासुखम् ।
तदन्ते महतीं पूजां कुर्याद्ब्राह्मणतर्पणम् ।।४।।

ततो मन्त्रप्रसिद्ध्यर्थं गुरुं सम्पूज्य तोषयेत् ।
एवं कृते तु मन्त्रस्य जायते सिद्धिरुत्तमा ।।५।।

नद्यां समुद्रगामिन्यां यद्वा पूर्वमुपोषितः ।
नाभिमात्रोदके स्थित्वा जपेन्मन्त्रमनन्यधीः ।
एष उत्तमपक्षः स्यात्पौरश्चरणके विधौ ।।६।।

दक्षिणामूर्त्तितन्त्रे तु त्रिरात्रोपोषितः शुचिः ।
इत्युक्तं दक्षिणामूर्तिमन्त्रे तदिति तान्त्रिकाः ।।७।।

एवं कृते न सिद्धःस्याद्यदि मन्त्रः कदाचन ।
तावत्पुरस्क्रियां कुर्याद्यावत्सिद्धो भवेन्मनुः ।।८।।

कल्पोक्तानखिलान् कामान् प्रयोगान् साधयेत्ततः ।
जपतोऽपि सदा पुंसो विनियोगमजानतः ।।९।।

मन्त्रः प्रच्यवते वीर्यात्तस्माद्यत्नपरो भवेत् ।
एवं च संहितादौ यत् प्रयोगः प्रतिषिध्यते ।।१०।।

तद्रामनन्त्रविषयं तदुपक्रम्यबोधनात् ।
अत एवाह मन्त्रस्य प्रयोगविधिशेषतः ।।११।।

यथाश्रीराममन्त्राणां प्रयोक्तुः पापसंभवः ।
न तथा लक्ष्मणमनोः किन्तु याति परां गतिम् ॥१२॥

अथवा प्रतिषेधोऽयं निषिद्धविषयो मतः ।
अतएवोपसंहारे मारणादिरुदाहृतः ॥१३॥

नायं मुक्तिप्रदो मन्त्रो मारणादौ नियुज्यताम् ।
उक्तं प्रयोगकर्तॄणां परलोको न विद्यते ॥१४॥

निषिद्धविषयं नोचेत्कथं तदुपपद्यताम् ।
परलोकार्थविहितप्रयोगे नैव तत्फलम् ।
भविष्यतीत्यन्यतरबाधावश्यं भविष्यति ॥१५॥

सेयं चोभयतःपाशारज्जुरित्यभिधीयते ।
तस्मादवश्यं स्वीकार्यं निषिद्धविषयं हितत् ॥१६॥

किं च तन्मात्रविश्रान्तिप्रतिषेधपरं च तत् ।
नानाविधवचोबाधाभयेन परिकल्प्यते ॥१७॥

प्रवृत्तमन्यथाकुर्याद्यदि मोहात् कथंचन ।
यतस्तदन्यथाभूतं तत एव समापयेत् ॥१८॥

समाप्ते यदिजानीयान्मयैतदन्यथा कृतम् ।
तावदेव पुनः कुर्यान्नावृत्तिः सर्वकर्मणः ॥१९॥

प्रधानस्याक्रिया यत्र साङ्गं तत् क्रियते पुनः ।
तदङ्गस्याक्रिया(यान्तु)सन्तु नावृत्तिर्नैव तत्क्रिया ॥२०॥

मन्त्राणामथ सिद्ध्यर्थं प्रवक्ष्ये वीरसाधनाम् ।
यस्मिन्मन्त्रे श्रमेणापि नैव सिद्धिः समीहिता ॥२१॥

जायते तत्र कर्तव्या यत्नतो वीरसाधना ।
सम्यक् सिद्धैकमन्त्रस्य नासाध्यं विद्यते क्वचित् ॥२२॥

बहुमन्त्रवतः पुंसः का कथा शिव एव सः ।
यः कश्चित्कुरुते वीरसाधनां सुसमाहितः ॥२३॥

प्राप्नोति परमां सिद्धिं नात्र कार्या विचारणा ।
तस्मात्सर्वप्रयत्नेन कर्तव्या वीरसाधना ॥२४॥

निर्भयेनैव शुचिना भूत्वा सर्वार्थसिद्धिदा ।
नास्याः परतरं किञ्चिद्विद्यते शीघ्रसिद्धिदम् ॥२५॥

तस्मात्सर्वप्रयत्नेन कर्तव्या वीरसाधना ।
कथ्यते चैव लोकोक्त्या तद्विधानमनुत्तमम् ॥२६॥

भैरवेण पुरा प्रोक्तं सर्वसिद्धिकरं परम् ।
गृह एव समुत्पाद्य मधुमांसगुडौदनैः ॥२७॥

सपिष्टकैर्बलिच्छागमक्षतं कुसुमादिकम् ।
आदाय दुग्धसहितं सार्धयामोत्तरं निशि ॥२८॥

एकावेक्षकसंयुक्तोऽप्यस्त्रपाणिर्भयोज्झितः ।
चितामागत्य तं दूरे दृष्ट्वा धृत्वा कियति पश्चिमे ॥२९॥

उपविश्य चिताभागे प्राङ्मुखोवोत्तरामुखः ।
आचम्याञ्जलिमाबद्ध्य मन्त्रमेनं जपेत्सुधीः ॥३०॥

येचात्रैव स्थिता देवा राक्षसाश्च भयानकाः ।
ते प्रयच्छन्तु मे सिद्धिं ममत्वेनानुकम्पया ॥३१॥

इति वारत्रयं कृत्वा बलिं पात्रेषु कल्पयेत् ।
उदीच्यादि चिताद्वारचतुष्के तच्चतुष्टयम् ॥३२॥

धृत्वा प्रदक्षिणं दुग्धैर्मन्त्रेण बलिमुत्सृजेत् ।
हूँ श्मशानषम्भ इमं सामिषान्नबलिं वदेत् ॥३३॥

गृह्ण गृह्णापयद्वन्द्वं ततो विघ्नं निवारय ।
मम सिद्धिं प्रयच्छेति स्वाहान्तेति मनुर्मतः ॥३४॥

मायान्ते भैरवेत्युक्त्वा भयानकपदं वदेत् ।
श्मशानाधिप इत्युक्त्वा इममित्यादिको परः ॥३५॥

हूँ कालभैरवेत्युक्त्वा श्मशानाधिप ईरयेत् ।
इममित्यादिकस्त्वन्यो दक्षिणस्यां मनुर्मतः ॥३६॥

हूँ महाकाल इत्युक्त्वा श्मशानेत्यादि पूर्ववत् ।
प्रतीच्यामेष मन्त्रः स्यात्ततोऽनेन निवेदयेत् ॥३७॥

श्मशानवासिनि महाभीमे कालिके घोरनिश्वने ।
गृहाणेवं (मं) वलिं मातर्देहि मे सिद्धिमुत्तमाम् ॥३८॥

हूँ कालिके द्विचा(ठा)न्तेन महाकालसमीपतः ।
प्राणायामादिकं कुर्यात्ततो ध्यात्वेष्ट देवताम् ॥३९॥

---

१. हूँ श्मशानषम्भ इमं सामिषान्नबलिं गृह्ण गृह्णापय गृह्णापय विघ्नं निवारय मम सिद्धिं प्रयच्छ स्वाहा ।

जपेदव्यग्रहृदयो निर्भयः शुद्धमानसः ।
एकाक्षरेऽयुतं जापो द्व्याक्षरेऽ(ष्ट)सहस्रकम् ।।४०।।

त्र्यक्षरेत्वयुतार्धं स्यादतः साष्टसहस्रकम् ।
सर्वमन्त्रेषु संख्योक्ता जपान्ते देवता यदि ।।४१।।

साक्षाद्भवति तामिष्ट्वा देहि देहीति भाषते ।
तदा छागबलिं दत्त्वा वरं सम्प्रार्थयेद्बुधः ।।४२।।

अथवा मृतके कुर्यात्साधको वीरसाधनाम् ।
तं पञ्चवत्सराद्‌ध्र्वम(ष्टो)द्‌र्ध्वमिति कश्चन ।।४३।।

सार्धयामोर्ध्वतो रात्रौ निर्भयस्तु समानयेत् ।
धृत्वा चतुष्पथे तीरे नद्या वा मृतकं बुधः ।।४४।।

हूमित्यानीय तेनैव स्नापयेदुपवेशयेत् ।
मृतकोपरि संपूज्य विधिवत्स्वेष्ट देवताम् ।।४५।।

बल्यादिकं यथापूर्वं सर्वत्रैवायुतं जपेत् ।
दद्याच्छागबलिन्त्वन्ते भैरवेऽनामिका मता ।।४६।।

तर्जनीमध्यमानामा योगिन्यां तर्जनी मता ।
क्षेत्रपाले गणेशे तु मध्यान्यत्र यथेष्ट(च्छ)या ।।४७।।

नास्मात्परतरं किंचिद्वर्तते शीघ्रसिद्धिदम् ।
मुनिभिर्दैवतैश्चैव कथितं साधकेप्सितम् ।।४८।।

निर्भयश्च शुचिश्चैव अक्रोधो विजितेन्द्रियः ।
महाबलो दयालुश्च कथितोऽयमवेक्षकः ।।४९।।

ततः प्रयोगान् कुर्वीत साधको निजवाञ्छितान् ।।५०।।

---

अथात्र होमद्रव्याणां प्रमाणमभिधीयते ।
विस्तरेणापि संक्षेपान्नानातन्त्रानुसारतः ।।१।।

कर्षमात्रं घृतं होमे शुक्तिमात्रं पयः स्मृतम् ।
उक्तानि पञ्चगव्यानि तत्समानं मनीषिभिः ।।२।।

तत्समं मधुदुग्धान्नमक्षमात्रमुदाहृतम् ।
पयश्चुलुकमात्रं स्यात्तथा मध्विति केचन ।।३।।

ननु (न्व) सङ्गतमेतत्स्याद्द्रवद्रव्ये स्रुवः स्रुतेः ।
तत्कथं मधुदुग्धादेर्भवेच्चुलुकमात्रता ।।४।।

उच्यतेऽश्वत्थपत्रादेर्विधिना तत्परं भवेत् ।
मूलवाक्यं स्रुवालाभे नित्यहोमादिकर्मणि ।।५।।
चुल्लुकेनापि होतव्यमिति सूचकमुच्यते ।
चुल्लुकग्रहणं केचिदित्याहुः साम्प्रदायिकाः ।।६।।
दधि प्रसृतिमात्रं स्याल्लाजाःस्युर्मुष्टिसम्मिताः ।
पृथुकास्तत्प्रमाणाः स्युः सक्तवोऽपि तथोदिताः ।।७।।

गुडः पलार्धमानं स्याच्छर्करापि तथोदिता ।
ग्रासार्धं चरुमानं स्यादिक्षुः पर्वावधिर्मतः ।।८।।

एकैकं पत्रपुष्पाणि तथापूपानि कल्पयेत् ।
कदलीफलनारङ्गफलान्येकैकशो विदुः ।।९।।

मातुलुङ्गं चतुःखण्डं पनसं दशधाकृतम् ।
एकैकं मातुलुङ्गानीत्येवं केचिदिहोचिरे ।।१०।।

अष्टधा नारिकेराणि खण्डितानि विदुर्बुधाः ।
त्रिधाकृतं फलं बैल्वं कपित्थं खण्डितं द्विधा ।।११।।

उर्वारुकफलं होमे कथितं खण्डितं त्रिधा ।
फलान्यन्यानि खण्डानि समिधः स्युर्दशाङ्गुलाः ।।१२।।

नाङ्गुष्ठादधिका ग्राह्या समित्स्थूलतमा क्वचित् ।
न वियुक्ता त्वचा चैव न सकीटा न पाट्रिता ।।१३।।

प्रादेशान्नाधिका नोना तथा न स्याद्वि(द्वि)शाखिका ।
न सपर्णा न निर्वीर्या होमेषु च विजानता ।।१४।।

शान्त्यर्थं सत्वचश्चार्द्रा विपरीता जिघांसता ।
विशीर्णा विदला ह्रस्वा वक्राः ससुषिरास्तथा ।।१५।।

दीर्घाः स्थूला घुणैर्युक्ताः सर्वसिद्धिविनाशिकाः ।
श्रीसोमशम्भुरप्याह प्रमाणं मूलकादिषु ।।१६।।

खण्डत्रयं च मूलानां फलानां स्वस्वमानतः ।
ग्रासार्धमात्रमन्नानामक्षाणि पञ्चहोमयेत् ।।१७।।

इक्षोरार्पविकं मानं लतानामङ्गुलद्वयम् ।
कन्दानामष्टमं भागं जुहुयाद्विधिना परम् ।।१८।।

दूर्वात्रयं समुद्दिष्टं गुलूची चतुरङ्गुला ।
व्रीहयो मुष्टिमात्राः स्युर्मुद्गमाषयवा अपि ।।१९।।

इतोऽन्यथा वदन्त्येके प्रमाणं मुद्गकादिषु ।
मुद्गाः (काः) कर्षमात्राः स्युः सप्ताष्टौ वा यवा मताः ।।२०।।

पञ्चषा भालतारे(वे णु यवाः पूपनि(पूपानि)कै(चै कशः ।
मुष्ट्यर्धं तण्डुलाः प्रोक्ता मुष्ट्यर्धार्धास्तु क(कै)श्चन ।।२१।।

कोद्रवा मुष्टिमात्राः स्युर्यवाग्वाः पयसो मितिः ।
गोधूमा रक्तकलमा विहिता मुष्टिमानतः ।।२२।।

राजमाषाः षोडशशः गोधूमा रक्तशालयः ।
राजमाषमिताः प्रोक्ता इत्यन्ये तन्त्रवेदिनः ।।२३।।

तिलाश्चुलुकमात्राःस्युः सर्षपोऽपितथोदितः ।
कैश्चिदाहुतिषु प्रोक्ताः कर्षार्धार्धास्तु सर्षपाः ।।२४।

ज्ञानार्णवेतु सम्प्रोक्ता शतं संख्या तयोर्द्वयोः ।
शुक्तिप्रमाणं लवणं मरीचान्येकविंशतिः ।।२५।।

गुरुर्बदरमात्रंस्याद्रामठं तत्समं स्मृतम् ।
चतुरङ्गुष्ठमानं स्याद्व्यञ्जनं कृशरं तथा ॥२६॥

तिलकल्कं तथा प्रोक्तं मन्त्रतन्त्रविशारदैः ।
चन्दनागुरुकर्पूरकस्तूरीकुङ्कुमानि च ॥२७॥

तिन्तिणीबीजमानानि कथितानि मनीषिभिः ।
श्रीसोमशम्भुना प्रोक्तं प्रमाणं चन्दनादिषु ॥२८॥

कलायसम्मितानेतान् गुग्गुलुं बदरास्थिवत् ।
घनसारश्चन्दनानि कस्तूरीकुङ्कुमानि च ॥२९॥

चणकप्रमितान्यन्यैः प्रोक्तान्यागमवेदिभिः ।
अनुक्ते तु हविर्द्रव्ये तिलाज्यं हविरुच्यते ॥३०॥

अनुक्ते चाञ्जनद्रव्ये घृतमेवाञ्जनं विदुः ।
संख्यानुक्तौ सहस्रं स्याद्द्रव्यानुक्तो घृतं तथा ॥३१॥

समिधोऽनुक्तविषये पालाश्यः परिकीर्तिताः ।
दक्षिणामूर्तितन्त्रे तु प्राहैतद्गार्ग्यसंहिता ॥३२॥

आज्यं द्रव्यमनादेशे जुहोतिषु विधीयते ।
समु(म्व)दत्येतदेतेन स्मृतिदृष्टेन वर्त्मना ॥३३॥

लाजादिहोमो हस्तेन साङ्गुष्ठेन विधीयते ।
समित्पुष्पफलादीनां कर्तव्यो मृगमुद्रया ॥३४॥

द्रवद्रव्ये स्रुवः प्रोक्तो मन्त्रतन्त्रविशारदैः ।
मिलित्वानामिकाङ्गुष्ठमध्यमाग्राणि योजयेत् ॥३५॥

शिष्टाङ्गुल्युच्छ्रिते कुर्यात् मृगमुद्रेयमीरिता ।
वैश्वानरं स्थितं ध्यायेत् समिद्धोमेषु साधकः ॥३६॥

शयानमाज्यहोमेषु निषण्णं शेषवस्तुषु ।
कर्णे होमाद् भवेद्व्याधिः नेत्रेऽन्धत्वमुदीरितम् ॥३७॥

नासिकायामथाधिः स्याद्द्रव्यच्छेदोऽथ मस्तके ।
तेन होमं प्रकुर्वीत मुखे नित्यं विभावसोः ॥३८॥

यतः काष्ठं ततः श्रोत्रं यतो धूमोऽत्र नासिका ।
यत्राल्पज्वलनं नेत्रं यत्राङ्गारस्ततः शिरः ॥३९॥

यत्र प्रज्वलिता ज्वाला जिह्वा सा जातवेदसः ।
क्षुत्तृटक्रोधत्वरायुक्तो हीनमन्त्रैर्जुहोति यः ।।४०।।

अप्रवृद्धे (बुद्धे) सधूमे वा सोऽन्धःस्यादन्यजन्मनि ।
स्वल्पे रूक्षे सस्फुलिङ्गे वामावर्त्ते भयानके ।।४१।।

आर्द्रकाष्ठेन सम्पूर्णे तथा लिहति मेदिनीम् ।
कृष्णार्चिषि सुदुर्गन्धे फूत्कारवति पावके ।।४२।।

आहुतीर्जुहुयाद्यस्तु तस्य नाशो भवेद्ध्रुवम् ।
योऽनर्चिषि जुहोत्यग्नौ व्य···विनि च मानवः ।।४३।।

मन्दाग्निरामयावी च दरिद्रश्चैव जायते ।
तस्मात्समिद्धे होतव्यं नासमिद्धे कदाचन ।
आरोग्यमिच्छतायुश्च श्रियमात्यन्तिकीं तथा ।।४४।।

स्वर्णसिन्दूर बालार्क कुङ्कुमक्षौद्रसन्निभः ।
सुवर्णरेतसो वर्णः शोभनः परिकीर्त्तितः ।।४५।।

भेरी वारिदहस्तीन्द्रध्वनिर्वह्नेः शुभावहः ।
नागचम्पक पुन्नाग पाटलायूथिकानिभः ।।४६।।

पद्मेन्दीवरकल्हारसर्पिर्गुग्गुलुसन्निभः ।
पावकस्य शुभोगन्ध इत्युक्तं तन्त्रवेदिभिः ।।४७।।

प्रदक्षिणास्त्यक्तकम्पाः छत्राभाः शिखिनः शिखाः ।
शुभदा यजमानस्य राष्ट्रस्यापि विशेषतः ।।४८।।

शुभदः काशसंकाशो धूमोऽग्नेः कुन्दसन्निभः ।
पिङ्गो रोगकरो नित्यं रौप्याभो राष्ट्रहानिदः।।४९।।

कृष्णो हुतभुजो वर्णो यजमानं विनाशयेत् ।
खरवायससंराव सदृशो ध्वनिरिष्टहा ।।५०।।

विष्ठायाः सदृशो गन्धो वह्नेर्दुःखानि कारयेत् ।
मूत्रसमो बलहानिं स्वेदाभः शुभनाशकः ।।५१।।

पूतिगन्धो हुतभुजो होतुर्दुःखप्रदो भवेत् ।
छिन्नावृता शिखा कुर्यान्मृत्युं धनपरिक्षयम् ।।५२।।

शुकपक्षसमो धूमः पारावतसमप्रभः ।
हानिं तुरगजातीनां गवां च कुरुते चिरात् ।।५३।।

आवर्तः शुभदो नित्यं प्रादक्षिण्यविधिक्रमात् ।
दर्दुरे विद्युतां पाते विस्फुलिङ्गे तथैव च ।
कृशानोर्होमकालेस्यादनर्थमशुभोदयः ।।५४।।

एवमादिषु दोषेषु प्रायश्चित्ताय साधकः ।
मूलमन्त्रेण जुहुयात्पञ्चविंशतिसंख्यया ।।५५।।

आज्यैरष्टाधिकशतं जुहुयाच्छान्तये बुधः ।
अस्त्रेण साधकवरश्चक्रपूजां समाचरेत् ।।५६।।

प्रायश्चित्तमिदं प्रोक्तं त्रिपुरासारसंग्रहे ।।५७।।

---

अथ प्रसङ्गाच्छास्त्रोक्तं प्रमाणमभिधीयते ।
पञ्चकृष्णलको माषस्ते सुवर्णस्तु षोडश ।।१।।

[पलं सुवर्णाश्चत्वारो निष्कमष्टोत्तरं शतम्]
द्वात्रिंशत्पलकं प्रस्थं स्वयमुक्तं स्वयम्भुवा ।।२।।

[निष्कमक्षं वदन्त्येके निष्कं पलमथापरे ।
द्वे गुञ्जे रूप्यमाषः स्यात्पलानि धरणो दश] ।।३।।

आढकं तु चतुष्प्रस्थं चतुर्भिर्द्रोण आढकैः ।
राशिमानं तदेवस्यात् खारी षोडशभिश्च तैः ।।४।।

विंशत्या च भवेत् कुम्भो वाहः स्याद्दशभिश्च तैः ।
खारीणां त्रितयं भार उदितः शास्त्रतः क्रमात् ।।५।।

द्वे सहस्रे पलानां तु भारः सम्यगुदीरितः ।
भारस्य दशमांशेन हारमिच्छन्ति केचन ।।६।।

मुष्टिः पलप्रमाणं स्याद्द्वे पले प्रसृतिर्भवेत् ।
अष्टमुष्टिर्भवेत्कुञ्चः कुञ्चेरष्टौतु पुष्कलम् ।।७।।

पुष्कलानि च चत्वारि आढकं तदनुक्रमात् ।
अष्टौतु पुष्कलान्येवं पूर्णपात्रमथोचिरे ।।८।।

चतुः षष्ट्या पलैः कुम्भं चतुष्प्रस्थमुदीरयेत् ।
द्वे पले च प्रकुब्जं स्यात् प्रसरं तद्युगं भवेत् ।
तद्युगं कुलवं द्विष्टं प्रस्थं पात्रमनुक्रमात् ।।९।।

तथाढकं शिवमथ द्रोणं खारीति केचन ।
पञ्चगुञ्जो भवेन्माषः तेऽक्षः कर्षस्तु षोडश ।।१०।।

माषास्तु द्वादशैवाक्ष इति विष्णुरिहाब्रवीत् ।
वैदिके परिभाषैषा नागमेषूपयुज्यते ॥११॥

तस्मात् प्रसृतिमुष्ट्यादि शुक्तिवच्चुलुकादिवत् ।
लौकिकं तदुपादेयमिति चागमवेदिनः ॥१२॥

होमस्य कुण्डसाध्यत्वादिनानीं तन्निरूप्यते ।
होमानुसारतस्तच्च कामनावशतस्तथा ।।१।।

नानाविधं प्रसङ्गेन मण्डपस्यापि लक्षणम् ।
संक्षेपादपि संक्षेपाद्यथाशास्त्रं प्रकाश्यते ।।२।।

इन्द्रेशसोमदिग्भागे पूजामण्डपतश्चरेत् ।
मण्डपं तत्फलाकांक्षी शुभार्थसिद्धय: क्रमात् ।।३।।

दीक्षापुरस्क्रियादीनां साक्षाद्यदुपकारकम् ।
अधुना तत् समासेन कण्ठनाभिसमेषणम् (खलम्) ।।४।।

सयोनिमण्डपं भूरिभेदं कुण्डं प्रकाश्यते ।
न्यूनाधिके तु तस्योक्ता भूरिदोषा विशारदैः ।।५।।

यत्नमास्थाय कर्तव्यं तदुक्तं विश्वकर्मणा ।
खातेऽधिके भवेद्रोगी हीने धेनुधनक्षय: ।।६।।

वक्रकुण्डे तु सन्तापो मरणं छिन्नमेखले ।
मेखलारहिते शोकोऽत्यधिके वित्तसंक्षय: ।।७।।

भार्याविनाशनं प्रोक्तं कुण्डं योनिविनाकृतम् ।
अपत्यध्वंसनं प्रोक्तं कुण्डं यत्कण्ठवर्जितम् ।।८।।

मानाधिक्ये भवेन्मृत्युर्मानहीने दरिद्रता ।
भैरवेऽपि च ते प्रोक्ता: कुण्डदोषा: प्रयत्नत: ।।९।।

सूत्राधिके भवेद्द्वेषो मानहीने दरिद्रता ।
सक्रोध: कण्ठहीने स्यादसिद्धिर्न्यूनमेखले ।।१०।।

उच्चाटस्त्रुटिते छिद्रसङ्कुले वाच्यता भवेत् ।
भूमिशुद्धिं विधायादौ खननादि विधानत: ।।११।।

ज्ञात्वा च समतां भूमेर्मण्डपादि समाचरेत् ।
शुद्धोक्तः साम्यकरणे प्रकारः कल्प्यते मया ।।१२।।

कोणेनैकीकृते मूले पृथक् सूक्ष्मसमाग्रयोः ।
दण्डयोरग्रनैकट्येऽन्यस्तिर्यक् मध्यचिह्नितः ।।१३।।

कीलादिना योजनीयो दण्डः समतया द्वयोः ।
मूलदेशेन स्वसूत्रमस्पृशद्भारवद्गुरुम् ।।१४।।

भूस्थेऽग्रयुग्मे मध्याङ्कात्तिर्यग्दण्डगताद्यतः ।
खनेत्तत्पूरयेदन्यन्निम्नयेद्वापि युक्तितः ।।१५।।

अङ्के यावत्सूत्रमेति भूरेवं समतां व्रजेत् ।।१६।।

अथवान्यप्रकारेण जानीयात् समतां भुवः ।
गृहीतवास्तुं खात्वा तु शल्योद्धारं तु कारयेत् ।।१७।।

सर्वतः सुसमं कृत्वा स्थलं दर्पणसन्निभम् ।
छिद्रमध्यन्तु कलशं साराम्बुपरिपूरितम् ।।१८।।

सुसमाधारकं कृत्वा स्थलमध्ये समं न्यसेत् ।
ततः परिस्रुतो(ता)म्भोभिः समां सिक्ते(समासिक्ते)तु भूतले ।

न्यूनाधिकं तु संस्थानं यथा ज्ञेयं तदम्भसा ।।१९।।

अथ प्राच्यादिबुद्ध्यर्थं विधानं सम्यगुच्यते ।
सूच्यग्रं शरणं शङ्कुमृजुं संस्थाप्यमध्यतः ।।२०।।

तन्मानं मण्डलं कृत्वा तच्छाया प्रविशेद्यतः ।
निर्याति च यतस्तद्वद्दद्याच्चिह्नं द्वयोरपि ।।२१।।

सूत्रं प्राक्सूत्रमेवंस्यादतः प्राच्यादिनिर्णयम् ।
विधाय मण्डपादीनि रचयेदप्यतन्द्रितः ।।२२।।

दीक्षा पुरस्क्रियादौ यो मण्डपः सतु कथ्यते ।
नक्षत्रवारराशीनामनुकूले शुभे दिने ।।२३।।

पुण्याहं वाचयित्वा तु मण्डपं रचयेच्छुभम् ।
संपूज्य गन्धपुष्पाद्यैर्ब्राह्मणान् स्वस्ति वाचयेत् ।।२४।।

सोङ्कारं ब्राह्मणे ब्रूयान्निरोङ्कारं महीपतौ ।
उपांशु च तथा वैश्ये स्वस्ति शूद्रे प्रयोजयेत् ।।२५।।

पञ्चभिः सप्तभिर्वापि नवभिर्वा सि(मि)तान्तरम् ।
षोडशस्तम्भसंयुक्तं चत्वारस्तेषु मध्यगाः ॥२६॥

अष्टहस्तसमुच्छ्रायाः संस्थाप्या द्वादशाभितः ।
पञ्चहस्तप्रमाणास्ते विच्छिद्रा ऋजवः शुभाः ॥२७॥

तत्पञ्चमांशं निखनेन्मेदिन्यां तन्त्रवित्तमः ।
नारिकेरदलैर्वांशैश्छादयेत्तं समन्ततः ॥२८॥

द्वाभ्यां द्वाभ्यां कराभ्यां स्याद्दिक्षु द्वारचतुष्टयम् ।
चतुरष्टाङ्गुलाधिक्यात् प्रोक्तं मध्यमपूज्ययोः ॥२९॥

द्वारेषु तोरणानि स्युः क्रमेण क्षीरभूरुहाम् ।
स्तम्भो व्राजः स्मृतस्तेषां पञ्चषट्सप्तभिः करैः ॥३०॥

हीनादिप्रक्रमादेवं परिणाहो दशाङ्गुलैः ।
तिर्यक्काष्ठनिवेशार्थं मूर्ध्निचूडां निवेशयेत् ॥३१॥

तिर्यक्कनकमानं स्यात् स्तम्भानामर्धमानतः ।
वैष्णवे मण्डपे द्वारे कीलानेवं प्रकल्पयेत् ॥३२॥

स्तम्भेषु प्रोक्तमानेन शङ्खचक्रगदाम्बुजान् ।
प्रागादिक्रमयोगेन न्यसेत्तेषां सुदारुजान् ॥३३॥

शूलानि कल्पयेच्छैवे तोरणे हस्तमानतः ।
शूले नवाङ्गुलं दैर्घ्यं तुरीयांशेन विस्तृतिः ॥३४॥

ऋजु वै मध्यशृङ्गं स्यात् किञ्चिद्वक्रं च पार्श्वयोः ।
हीने चैवं समाख्यातं द्व्यङ्गुलं रोपयेत्तथा ॥३५॥

अन्यत्र द्व्यङ्गुलाद्वृद्धिरेशस्याङ्गुलिवृद्धितः ।
दिक्पताका निबध्नीयाल्लोकपालसमप्रभाः ॥३६॥

मध्ये ध्वजः किङ्किणिकायुतो द्वारेषु युग्मशः ।
सुगन्धरत्नमाल्यादियुक्ताः कुम्भाः प्रकीर्त्तिताः ॥३७॥

पताकानां तु विस्तारो वितस्तिर्दीर्घता करैः ।
पञ्चभिस्तु ध्वजस्यैतो द्विगुणं मानमुच्यते ॥३८॥

विचित्रो वर्णतः कार्यः सर्वदृष्टिमनोहरः ।
वितान दर्भमाल्याद्यैरलङ्कुर्वीतमण्डपम् ॥३९॥

तत्त्रिभागमिते क्षेत्रेऽरत्निमात्रसमुच्छ्रिताम् ।
चतुरस्रां ततो वेदीं मण्डलाय प्रकल्पयेत् ॥४०॥

यथोक्तमण्डपे विद्वान् वेदिकाया बहिस्त्रिधा ।
क्षेत्रं विभज्य मध्यांशे पूर्वादि परिकल्पयेत् ॥४१॥

अष्टास्वाशासु कुण्डानि रम्याकाराण्यनुक्रमात् ।
चतुरस्रं योनिमर्धचन्द्रं त्र्यस्रं सुवर्तुलम् ॥४२॥

षडस्रं पङ्कजाकारमष्टास्रं तानि नामतः ।
आचार्यकुण्डं मध्ये स्याद गौरीपतिमहेन्द्रयोः ॥४३॥

ऐन्द्र्यां स्तम्भे चतुष्कोणं अग्नौ भोगे (भागे) भगाकृति ।
चन्द्रार्धं मारणे याम्ये त्र्यस्रं द्वेषेतु नैर्ऋते ॥४४॥

वारुण्यां शान्तिके वृत्तं षड (स्रमु) च्चाटनेऽनिले ।
उदीदीच्यां पौष्टिके पद्मं रौद्र्यामष्टाश्रि मुक्तिदम् ॥४५॥

पञ्चाश्रिकुण्डं वायव्ये भूतादिग्रहनिग्रहम् ।
अभिचारोपशान्त्यर्थं ईशे सप्ताश्रि विन्यसेत् ॥४६॥

भुजौ (भुक्तौ) मुक्तौ तथा पुष्टौ जीर्णोद्धारे तथैव तत् ।
सदा होमे तथाशान्तावेकं वरुणदिग्गतम् ॥४७॥

सर्वसिद्धिकरं कुण्डं चतुरस्रं सुशोभनम् ।
अर्द्धेन्द्वाभं रिपुहरं त्र्यस्त्रं मारणकर्मणि ॥४८॥

षडस्रं रोगशमनमष्टास्रमिति केचन ।
चतुरस्रं तु विप्राणा राज्ञां वर्तुलमिष्यते ॥४९॥

वैश्यानामर्धचन्द्राभं शूद्राणां त्र्यस्रमीरितम् ।
चतुरस्रं च सर्वेषां केचिदिच्छन्ति तान्त्रिकाः ॥५०॥

पूर्वापरायतं सूत्रं विन्यसेद्धस्तमानतः ।
तस्यार्धार्धं परित्यज्य मत्स्यौ द्वौ परितो लिखेत् ॥५१॥

पूर्वापराग्रमालम्ब्य अर्धचन्द्रद्वयेन तु ।
तयोर्मध्यगतं सूत्रं विन्यसेद्दक्षिणोत्तरम् ॥५२॥

उदक्सूत्रं त्विदं विद्याच्चतुरस्रं ततश्चरेत् ।
चतुः सूत्राग्रमालम्ब्य मध्यतो दिक्चतुष्टये ॥५३॥

वर्त्तुलार्धानि निर्माय मत्स्यान्कोणगतांल्लिखेत् ।
मत्स्ये वक्रगताग्राणि तत्रसूत्राणि पातयेत् ॥५४॥

चतुरस्रं भवेदेवमशुद्धं त्वन्यथा भवेत् ।
होमानुसारतो यावत् प्रमाणं कुण्डमिष्यते ॥५५॥

मूलभूतं तदन्येषां चतुरस्रं प्रकल्पयेत् ।
ततो योन्यादिकुण्डानि तावत्क्षेत्रमितानि च ॥५६॥

कारयेदतियत्नेन न्यूनाधिक्येऽतिदोषतः ।
ब्रह्मसूत्रस्य वेदोनशतं भागान् निधाय च ॥५७॥

एकोनविंशतिं भागानग्रतो वर्धयेद्बहिः ।
चिह्नं कृत्वा तथा सूत्रं प्रतीच्यां दक्षिणोत्तरम् ॥५८॥

पार्श्वयोर्वर्धयेद्विद्वानर्धाधिकनवांशकैः ।
चिह्नं कृत्वा तयोः पार्श्वे सावधानतया सुधीः ॥५९॥

प्राचीचिह्नं समारभ्य श्रोण्योश्चिह्नद्वयावधि ।
दत्ते सूत्रद्वये पश्चात्त्रिकोणं जायते ततः ॥६०॥

प्राक्सूत्रस्य परागत्र श्रोणीसूत्राग्रकाङ्क्षयोः ।
यन्मानं विद्यते तस्य त्वर्धमानेन साधकः ॥६१॥

श्रोण्योरग्रं समारभ्य मध्यसूत्रस्य पश्चिमम् ।
अग्रं यावत्परिभ्राम्येदर्धचन्द्रद्वयं भवेत् ।
योनिकुण्डं भवेदेतदन्यूनानधिकं शुभम् ॥६२॥

चतुरस्रीकृतं क्षेत्रं चतुर्विंशतिभागतः ।
प्रविभज्य ततश्चाधः सार्धभागद्वयं त्यजेत् ॥६३॥

अङ्कं कृत्वा ततश्चोर्ध्वं सार्धभागद्वयं पुनः ।
भागस्य षोडशांशोनं मुक्त्वा तत्रापि चिह्नयेत् ॥६४॥

पूर्वचिह्नमवष्टभ्य ज्यासूत्रं दक्षिणोत्तरम् ।
पातयित्वा ततश्चाधश्चिह्नमानेन पूर्वतः ॥६५॥

कर्कटेनाथ सूत्रेण भ्रामयेदर्धचन्द्रकम् ।
अर्धचन्द्रनिभं कुण्डं शोभनीयमिदं भवेत् ॥६६॥

चतुरस्रमितं क्षेत्रं चतुर्विंशतिधा भजेत् ।
पञ्चभिर्वर्धयेदग्रे श्रोण्याः सूत्रं पृथक् पृथक् ॥६७॥

प्राच्यां सूत्रं दशांशेन न्यूनाष्टमनवेन च ।
संवर्ध्य त्रिषु स्थानेषु चिह्नंकृत्वा त्रिसूत्रकम् ।
पातयेत्तेषु चिह्नेषु त्रिकोणं कुण्डमुत्तमम् ।।६८।।

षोडशांशैर्विभज्यास्य मध्यसूत्रं बहिर्न्यसेत् ।
एकं भागं कर्कटेन मानेनानेन मध्यतः ।
भ्रामयेद्वृत्तमेतत्स्यात् सर्वदृष्टिमनोहरम् ।।६९।।

मध्यसूत्रं जिनांशेन विभज्य पुरतोन्यसेत् ।
सार्धान् पञ्चनवान् मध्यात् तेन मानेन वर्तुलम् ।।७०।।

भ्रामयेत्तद्विभज्याथ षोढा चिह्नेषु षट्स्वपि ।
सूत्रषट्कं ततो दद्यात् षडस्रं कुण्डमुत्तमम् ।।७१।।

चतुरस्रीकृतं क्षेत्रं विभजेदष्टधा सुधीः ।
अष्टमांश प्रमाणेन कर्कटेन तु मध्यतः ।।७२।।

भ्रामयेद्वर्तुलं सेयं कर्णिका केसराः पुनः ।
अष्टमांशद्वयेनैव मध्यतो भ्रमणे कृते ।।७३।।

तृतीयेनाष्टमांशेन पत्राणां मध्यभूर्मता ।
चतुर्थेनोर्ध्वभूः क्षेत्रन्यासतुल्येन च क्रमात् ।।७४।।

चतुर्विंशतिधा भुं (भं)क्त्वा क्षेत्रस्य मध्यमं गुणम् ।
तस्यैकं भागमादाय भुं(भं)क्त्वा षोडशधा पुनः ।।७५।।

पञ्चभिः षोडशैर्भागैर्न्यूनं पञ्चममष्टमम् ।
भागमादाय तद्बाह्ये पञ्चमं मण्डलं सुधीः ।।७६।।

मध्यतो भ्रामयेत्सावै पत्राणामग्र भूर्मता ।
प्रागुक्त विधिना मन्त्री ततः पद्मं समालिखेत् ।।७७।।

खननं सर्वकुण्डानामग्रे यद्यपि दर्शितम् ।
तथाप्यस्य विशेषार्थं खननं प्रोच्यतेऽधुना ।।७८।।

कर्णिकाव्यासमानेन परित्यज्य तदुच्चताम् ।
निखनेदवशिष्टं तत् केसराणां च मण्डलम् ।।७९।।

खनेदन्तस्तदाकारं कुर्वन् पत्रभुवं खनेत् ।
पत्राकारा यथा सम्यग्जायन्ते निपुणस्तथा ।।८०।।

पद्मकुण्डमिदं प्रोक्तं कैश्चित्तु बहिरिष्यते ।
पद्मस्य लिखनं तन्न युक्तं कुण्डस्य तादृशम् ।
अनुसन्धीयते रूपं यत इत्यवगम्यते ॥८१॥

चतुरस्रीकृतं क्षेत्रं चतुर्विंशतिधा भजेत् ।
द्वात्रिंशता विभक्तस्य भागैकस्य त्रयोदश ॥८२॥

भागैश्च सहितानन्यां (न्यांश्च) चतुरस्रेषु वर्धयेत् ।
तावन्मानमितं मध्यसूत्रं कृत्वान्यदा लिखेत् ॥८३॥

चतुरस्रान्तरं बाह्ये दिक्सूत्रद्वयसंयुतम् ।
दिक्कोणयोरन्तराले अष्टौ चिह्नानि कारयेत् ॥८४॥

एकैकमन्तरा चिह्नं त्यक्त्वा…ष्टसु पातयेत् ।
सरलान्यष्टसूत्राणि सम्पातानीतरेतरम् ॥८५॥

चतुरस्रोभयस्यापि रेखाः सर्वाः प्रमार्जयेत् ।
अष्टसूत्र्य(त्र्या)श्च सूत्राणि कोणाष्टादधिकानि च ॥८६॥

मार्जयेदष्टकोणाख्यं कुण्डमेतदुदीरितम् ॥८७॥

पूर्वोक्तब्रह्मसूत्रस्य अर्धं द्वादशधा भजेत् ।
नवांशानां च यो विंशोप्यंशस्तेन समन्वितान् ॥८८॥

त्रींस्तु भागान्समादाय ब्रह्मसूत्रन्तु वर्धयेत् ।
तावद्व्यासार्धमानेन मण्डलं रचयेत्सुधीः ॥८९॥

तद्व्यासं पञ्चधा कृत्वा हित्वा भागद्वयं ततः ।
ज्यासूत्रं शेषमानं तु कृत्वा पञ्च प्रपातयेत् ॥९०॥

परस्पराग्रसम्पाता ज्यासूत्राणि च मण्डले ।
यथा पञ्च धनूंषि स्यु र्ज्याषष्ठांशशराणि च ॥९१॥

ज्यापञ्चकावशेषात्तु पञ्चास्रं कुण्डमुत्तमम् ॥९२॥

पूर्वोक्त ब्रह्मसूत्रस्य अर्धं षट्त्रिंशता भजेत् ।
अन्यान् सप्तन(ल)वांस्तस्मिन्सूत्रे संवर्ध्य तावता ॥९३॥

व्यासार्धेन ततः कुर्यान्मण्डलं तस्य विस्तरम् ।
विभज्य भागैर्विंशत्या विंशांशो विशिखोयथा ॥९४॥

भवेत्सर्वधनु:ष्वेवं ज्यासूत्रमथ पातयेत् ।
नवभिर्नवभिस्त्वंशैर्मिलिताग्रं समन्ततः ।।९५।।

सप्तधनूंषि जायन्ते ततः सम्मार्ज्य तानि वै ।
ज्यासप्तकावशेषात्तु सप्तास्त्रं कुण्डमुत्तमम् ।।९६।।

---

शारदादि निबन्धेषु कथिते कुण्डलक्षणे ।
न्युनाधिकत्वदोषोऽस्तीत्यङ्कवित् परिभावयेत् ।।१।।

यथाकामं तु कुण्डानि विधाय खननं चरेत् ।
यावान् कुण्डस्य विस्तार: खननं तावदीरितम् ।।२।।

दिव्यसारस्वते ग्रन्थेऽप्येतदेव प्रकीर्तितम् ।
चतुरस्रं चतुष्कोष्ठं सूत्रं कृत्वा यथा पुरा ।
हस्तमानेन तन्मध्ये तावन्निम्नायतं खनेत् ।।३।।

श्रीसारसंग्रहेऽप्येष एवार्थः स्फुटमीरितः ।
अयमेव हि सिद्धान्त उपपत्त्यापि सिध्यति ।।४।।

आद्यमेखलया सार्धं तावदित्यपि केचन ।।५।।

होमावद्धोत्तरे प्रोक्तं प्रतिष्ठासारसंग्रहे ।
हस्तमात्रं खनेत्तिर्यक् ऊद्ध्र्वमेखलया सह ।।६।।

कुण्डं जिनाङ्गुलैस्तद्वदूद्ध्र्वमेखलया सह ।
मन्त्रमुक्तावलीग्रन्थेऽप्येवमेव प्रकीर्त्तितम् ।।७।।

एवं यत्केनचित्प्रोक्तं निर्मूलकमिदं मतम् ।
मन्त्रमुक्तावलीकर्तुस्तदबोधविजृम्भितम् ।।८।।

योन्यादिकुण्डखननं चतुरस्रायतं मतम् ।
क्षेत्रव्यासचतुर्विंशेनाङ्केन परितस्तलम् ।
त्यक्त्वा कुण्डेषु सर्वेषु मेखलां रचयेत्सुधीः ।।९।।

परित्यक्तं तु यत्स्थानं तत्स्थानं कण्ठ उच्यते ।
विस्तारद्वादशांशेन केचिदिच्छन्ति तान्त्रिकाः ।।१०।।

मेखलानां भवेदन्तः परितो नेमिरङ्गुलात् (?) ।
एकहस्तस्य कुण्डस्य वर्धयेत्तत्क्रमात्सुधीः ।।११।।

दशहस्तान्तमन्येषामर्धाङ्गुलवशात् पृथक् ।
कामिकैकांशतः प्रोक्तः कण्ठः काम्यपरस्तु सः ।।१२।।

इत्याह कश्चिदुभयोर्विकल्पः परमार्थतः ।
मेखलैका च द्वे तिस्रो भूतसंख्या यथेच्छया ।।१३।।

कुर्याद्योन्यादिकुण्डेषु तत्तत्कुण्डानुरूपतः ।
जिनांशेन विभक्ते ताः व्यासे तिस्रस्तु मेखलाः ।।१४।।

चतुस्त्रीक्षणभागैः स्युर्नवर्तुदहनोन्नताः ।
केचिद्विस्तारतौल्येन ह्युन्नतत्वं वदन्ति वै ।।१५।।

कुण्डानां यादृशं रूपं मेखलानां तु तादृशम् ।
कुर्यात्सर्वत्र कुण्डेषु तिस्रः सर्वत्र शोभनाः ।।१६।।

षडऽर्ध्यंशोच्चविस्तारा विज्ञेयात्वेकमेखला ।
द्वयोर्मेखलयोर्मान माद्योर्मेखलयोर्यथा ।।१७।।

मेखलाः पञ्चधा कार्याः षट्पञ्चाधि त्रिपक्षकैः ।
भागैर्विस्तारिताज्ञेया उन्नताद्या नवाङ्गुलैः ।।१८।।

नवांशानां पञ्मोंश स्तन्न्यूनैश्चतुरंशकैः ।
द्वितीया चोन्नता द्वाभ्यामूनैस्तैश्च परा मता ।।१९।।

त्रिभिरूनैश्चतुर्थीस्यादवशिष्टैस्तु पञ्चमी ।
शारदातिलके तासां मानं यत्तदिहोच्यते ।।२०।।

उत्सेधायामतो मुष्टौ त्वेकार्धाङ्गुलसम्मिताः ।
अरत्निमाने कुण्डे तास्तिथ्येकाङ्गुल सम्मिताः ।।२१।।

एकहस्तमिते कुण्डे वेदाग्निनयनाङ्गुलाः ।
कुण्डे द्विहस्ते ता ज्ञेया रसवेदगुणाङ्गुलाः ।।२२।।

चतुर्हस्ते तु कुण्डे ता वसुतर्कयुगाङ्गुलाः ।
कुण्डे रसकरे तास्तु दशाष्टार्थाङ्गुलान्विताः ।।२३।।

वसुहस्तमिते कुण्डे मनुपंक्त्यष्टकाङ्गुलाः ।
दशहस्तमिते कुण्डे मनुभानदशाङ्गुलाः ।।२४।।

विस्तारोप्सेधतोज्ञेया मेखलास्तन्त्रवेदिभिः ।
दिव्य सारस्वते ग्रन्थे मानमुक्तमितोऽन्यथा ।।२५।।

सात्त्विकी मेखला पूर्वा सोन्नता द्वादशाङ्गुलैः ।
द्वितीया राजसी ज्ञेया मेखालाष्टाङ्गुलोच्छ्रिता ॥२६॥

तृतीया तामसी प्रोक्ता मेखला चतुरङ्गुला ।
पृथग्विस्तारमेतासु चतुरङ्गुलमानतः ॥२७॥

प्रागग्नियाम्य कुण्डानां प्रोक्ता योनिरुदङ्मुखा ।
दक्षस्था पूर्वयाम्ये तु जलस्था पश्चिमोत्तरे ॥२८॥

नवमस्यापि कुण्डस्य योनिर्दक्षिण दिक्स्थिता ।
शेषाणां प्राङ्मुखा प्रोक्तेत्यादावेवं प्रतीयते ॥२९॥

योनिकुण्डे योनिमब्जकुण्डे नाभिं च वर्जयेत् ।
प्रागग्नीत्यादि यत्प्रोक्तं सावकाशं तदन्यतः ॥३०॥

तथाहि चतुरस्रस्य सर्वास्वाशासु बोधनात् ।
सर्वार्थ साधकं यस्माच्चतुरस्र मुदाहृतम् ॥३१॥

मेखला मध्यतो योनिः कुण्डस्यार्धांशमानतः ।
आयता विस्तृता त्र्यंशैश्चतुर्विंशांशमानतः ॥३२॥

उन्नता तावदंशेन कृताग्रा कुण्ड मध्यतः ।
प्रविष्टेवेति वक्राग्रा जिनांशकृतमेखला ॥३३॥

मेखलार्थं पृथग्भूमिर्नग्राह्या किन्तु मध्यतः ।
योनिक्षेत्रस्य संग्राह्या मूले कुम्भद्वयोपमा ॥३४॥

अग्रे संकोचमापन्ना यद्वाश्वत्थदलाकृतिः ।
मुष्ट्यरत्न्येकहस्तानां कुण्डानामथवा भवेत् ॥३५॥

षट्चतुर्द्व्यङ्गुलायाम विस्तारोन्नतिशालिनी ।
एकाङ्गुलं तु योन्यग्रं कुर्यादीषदधोमुखम् ॥३६॥

एकैकाङ्गुलतो योनिं कुण्डेष्वन्येषु वर्धयेत् ।
यवद्वयक्रमेणैव तदग्रमपि वर्धयेत् ॥३७॥

योनेरन्तर्विलं स्रुग्वद्घृतस्य क्षरणक्षमम् ।
स्थलादारभ्य नालं स्याद्योनिमूलस्य धारणम् ॥३८॥

नालमेखलयोर्मध्ये परिधेः स्थापनाय च ।
रन्ध्रं कुर्यात्तथा विद्वान् द्वितीयमेखलोपरि ॥३९॥

कुण्डानां कल्पयेदन्तर्नाभिमम्बुज सन्निभाम् ।
तत्तत्कुण्डानुरूपां वा मानमस्य(स्या)निगद्यते ।।४०।।

कुण्डार्क्कांशसमुच्छ्राया कुण्डाष्टांशैश्च विस्तृता ।
तावद्भिरायताप्यंशैर्नाभिरुक्ता मनीषिभिः ।।४१।।

मुष्ट्यरत्न्येकहस्तानामथवोत्सेधतावतः ।
नेत्रवेदाङ्गुलोपेता कुण्डेष्वन्येषु वर्धयेत् ।।४२।।

यवद्वयक्रमेणैव नाभि पृथगुदारधीः ।
नाभिक्षेत्रं त्रिधा कृत्वा मध्ये कृत्वा तु कर्णिकाम् ।।४३।।

बहिरंशद्वयेनाष्टौ दलानिपरिकल्पयेत् ।
पत्राग्राणि ततः कुर्यात् सम्पूर्णं कुण्डलक्षणम् ।।४४।।

अत्राहुत्यनुसारेण कुण्डलक्षणमीरितम् ।
मुष्टिमानमितं कुण्डं शतार्धे संप्रचक्षते ।।४५।।

शतहोमेऽरत्निमात्रं हस्तमात्रं सहस्रके ।
द्विहस्तमयुते लक्षे चतुर्हस्तमुदीरितम् ।।४६।।

षड्हस्तं दशलक्षे च कोट्यामष्टकरं स्मृतम् ।
एकहस्तमितं कुण्डमेकलक्षे विधीयते ।।४७।।

लक्षाणां दशकं यावत्तावद्धस्तेन वर्धयेत् ।
दशलक्षाच्च आकोटेर्दशहस्तं विधीयते ।।४८।।

कोटि संख्यामिताद्धोमान्नास्ति होमोऽधिकोऽपरः ।
दशहस्तमितात्कुण्डान्न कुण्डं त्वधिकं भवेत् ।।४९।।

पुरश्क्रियादौ सर्वत्र चतुरस्रं प्रयोजकम् ।
यतस्तदुक्तं सर्वेषां सर्वसिद्धिकरं बुधैः ।।५०।।

अपि योन्यादिकुण्डानां प्रसङ्गादेव कीर्त्तनम् ।
द्विहस्तादिषु कुण्डेषु केचिदाहुरिहोल्वणाः ।।५१।।

द्विहस्तादिमितं ब्रह्मसूत्रं कृत्वा द्विकोणके ।
विधाय तत्र योन्यादि कुण्डान्यन्यानि कारयेत् ।।५२।।

कतिहस्ता त्वियं शालेत्येवं प्रश्ने कृते परः ।
आहेयं दशहस्तेति लौकिकं हि निदर्शनम् ।।५३।।

तदसद्द्विकरं कुण्डमित्यादौ तददर्शनात् ।
आकांक्षाविरहादेव त्वध्याहारो न युज्यते ॥५४॥

दशहस्तेति यच्चोक्तं प्रस्तावात्तत्तथोच्यते ।
द्विहस्तमयुते कुण्डमित्यादौ नैव दृश्यते ॥५५॥

प्रस्ताव आयतेर्वापि विस्तारस्याथवा ततः ।
द्विहस्तं कुण्डमित्यादिरुपदेशोऽयमुच्यते ॥५६॥

किन्तुक्षेत्रफलस्यैव द्वैगुण्याद्यवधार्यते ।
इत्यस्मत्सम्मतः पक्षस्तत्प्रकारोऽथ कथ्यते ॥५७॥

हस्तक्षेत्रे चतुर्विंशत्यङ्गुलं मध्यसूत्रकम् ।
अङ्गुलानि त्रयस्त्रिंशच्चैव सप्तक संयुताः ॥५८॥

चतस्रस्तु तथा यूकाः सार्धं लिख्याचतुष्टयम् ।
द्विहस्ते मध्यसूत्रे तु मानमेवं त्रिहस्तके ।
तन्मानमङ्गुलानेकचत्वारिंशच्चतुर्यवाः ॥५९॥

यूकाचतुष्टयं किञ्चिदूनं लिख्याचतुष्टयम् ।
चतुष्करे चाष्ट चत्वारिंशतङ्गुलकं च तत् ॥६०॥

अङ्गुलानि त्रिपञ्चाशद्विलिख्योनाश्च षड्यवाः ।
पञ्चहस्ते तु तन्मानं षट्करे क्षेत्र उच्यते ।
तन्मूलमष्टपञ्चाशदङ्गुलानि च षड्यवाः ॥६१॥

किञ्चिद्भागाधिकं यूकाद्वयं सप्तकरस्य तु ।
मूलं चतुर्यवैः साकं त्रिषष्टिश्चाङ्गुलान्यपि ॥६२॥

अङ्गुलानि तथा सप्तषष्टिः सप्तयवाः पुनः ।
किञ्चिदूना मध्यसूत्रमष्टहस्तस्य तूच्यते ॥६३॥

द्वासप्ततिरङ्गुलानि मूलं नवकरे मतम् ।
दसहस्तमिते कुण्डे तन्मूलं मध्यसूत्रकम् ।
वर्धयेत्पञ्चसप्तत्याङ्गुलैः सप्तयवैस्तथा ॥६४॥

अल्पाधिकाभ्यां लिख्या(?)भ्यां साकमेवं प्रकीर्त्तितम् ।
अतियत्नेन कुण्डानि द्विकरादीनि कल्पयेत् ॥६५॥

निर्माणं दुर्घटं यस्माद्द्विहस्तादिस्वरूपिणाम् ।
कुण्डस्य रूपं जानीयात् परमं प्रकृतेर्वपु: ।।६६।।

प्राच्यां शिर: समाख्यातं बाहूदक्षिणसौम्ययो: ।
उदरं कुण्डमित्युक्तं योनि: पादौ तु पश्चिमे ।।६७।।

---

अष्टादश स्युः संस्काराः कुण्डानां तत्र देशिताः ।
वीक्षणं मूलमन्त्रेण शरेण प्रोक्षणं मतम् ॥१॥
तेनैव ताडनं दर्भैर्वर्मणाभ्युक्षणं मतत् ।
अस्त्रेण खननोद्धारौ हृन्मन्त्रेण प्रपूरणम् ॥२॥
समीकरणमन्त्रेण वर्मणाभ्युक्षणं मतम् ।
कुट्टनं हेतिमन्त्रेण वर्ममन्त्रेण मार्जनम् ॥३॥
विलेपनं कलारूपकल्पनं तदनन्तरम् ।
त्रिसूत्रीकरणं पश्चाद् हृदयेनार्चनं मतम् ॥४॥
अस्त्रेण वक्त्रीकरणं हृन्मन्त्रेण कुशैः शुभैः ।
चतुष्पथं तनुत्रेण तत्त्वया दक्षपाटनम् ॥५॥
यागे कुण्डानि संस्कुर्यात् संस्कारैरेति(भि)रीरितैः ।
अथवा तानि संस्कुर्याच्चतुर्भिर्वीक्षणादिभिः ॥६॥
निबन्धान् विविधान् दृष्ट्वा सारमुद्धृत्य सर्वतः ।
कुण्डादिविधिरत्रोक्तो दध्नो घृतमिवादरात् ॥७॥

---

अथ हस्तवितस्त्यादि ज्ञानाय प्रतिपाद्यते ।
अङ्गुलादि विभागाय प्रकारः शास्त्रबोधितः ।।१।।

तत्रास्ति विमतिर्बह्वी वादिनां शारदादिषु ।
कर्तुर्दक्षिणहस्तस्य मध्यमाङ्गुलि पर्वणः ।।२।।

त्रसरेणुरनुरेणुर्वाणाग्रं लिख्यया सह ।
यूकायवोङ्गुलमिति क्रमादष्टगुणात्मकम् ।।३।।

जालान्तरगते भानौ यत्सूक्ष्मं दृश्यते रजः ।
प्रथमं तत् प्रमाणानां त्रसरेणुं प्रचक्षते ।।४।।

त्रसरेणुस्तु विज्ञेयो योऽष्टौ स्युः परमाणवः ।
कृतमुष्टिकः प्रकोष्ठो मुष्टी रत्निरिहोच्यते ।।५।।

करएव कलांशेन हीनो रत्निरुदाहृतः ।
तदुक्तंनामलिङ्गानामनुशासनसंग्रहे ।।६।।

प्रकोष्ठो विस्तृतकरो हस्तोमुष्ट्या च बद्धया ।
सरत्निः स्यादरत्निः स निः कनिष्ठेन मुष्टिना ।।७।।

---

वस्तुत: परीशिष्टादे: स्मृतित्वात् स्मार्तकर्मणि ।
तदुक्तमङ्गलं विद्यादागमोक्तेषुकर्मसु ।
शारदाद्युक्तविधिना विद्याद्धस्तादि लक्षणम् ।।१।।

पञ्चरात्रे तथाचोक्तं हस्तादीनां तु लक्षणम् ।
आचार्यदक्षिणकरे मध्यमाङ्गुलिमध्यमे ।
पर्वणोरन्तरं दैर्घ्यं मात्राङ्गुलमुदाहृतम् ।।२।।

परमाणुक्रमात् प्रोक्तो यवोऽष्टगुणितोङ्गुल: ।
मध्यस्य दैर्घ्यमानेन मात्राङ्गुलमुदाहृतम् ।।३।।

छन्दोगपरिशिष्टे यदङ्गुलस्य तु लक्षणम् ।
अङ्गुष्ठाङ्गुलमानं तु यत्रयत्रोपदिश्यते ।
तत्र तत्र बृहत्पर्वग्रन्थिभिर्मिमनुयात् सदा ।।४।।

तथा कात्यायनेनापि उक्तमङ्गुल लक्षणम् ।
अङ्गुलस्य प्रमाणं तु षड्यवा: पार्श्वसम्मिता: ।।५।।

इदमप्यभियुक्तानां वच: सकल सम्मतम् ।
मध्याङ्गुलीकूर्परयोर्मध्ये प्रामाणिक: कर: ।।६।।

रत्निरङ्गुष्ठपर्वाणि संख्याया चैक विंशति: ।
दशत्वङ्गुष्ठपर्वाणि प्रादेश: परिकीर्तित: ।।७।।

एवं विकल्प्य सिद्धान्तान् पुरश्चरण चन्द्रिकाम् ।
कुर्वताऽत्रैष सिद्धान्त: कृतो हस्तादिकर्मणि ।।८।।

सिद्धान्त: कल्पकारस्य वाक्यादत्र भविष्यति ।
कल्पकृद्वचनं साक्षाद्दृष्टवेदोपजीवकम् ।।९।।

स्मृतिकारा: स्मृतिं चक्रुरनुमायागमं तत: ।
समस्ते प्रपदस्ते (स्थे) वा य: स्यादूर्ध्वकरेण वै ।।१०।।

पञ्चमोंऽशः स हस्तः स्यात् जिनांशस्तस्य चाङ्गुलम् ।
लवोष्टमोयवस्तस्य प्रोक्तं हस्तादि लक्षणम् ।।११।।

अङ्गुलं तु भवेन्मानं वितस्तिर्द्वादशाङ्गुलम् ।
तद्द्वयं हस्तमुदितं तत् किन्त्विति मतं परम् ।।१२।।

अनयोर्विषयः प्रोक्तस्तत्रैवाङ्गुलयोर्यथा ।
यागोपकरणं सर्वं कुर्यान्मात्राङ्गुलेन वै ।।१३।।

होमाङ्गानि स्रुवादीनि कुण्डमुष्ट्यङ्गुलानि च ।
मानाङ्गुलेन कुर्वीत यथाशास्त्रं विचक्षणः ।।१४।।

कर्मणामथ सर्वेषां किष्कुरेवाथवा मतः ।
इत्याहुस्तत्त्वसिद्धान्त सारसंभारवेदिनः ।।१५।।

अङ्गुलारत्निमुष्ट्यादि याजमानमिहोच्यते ।
नाचार्यस्य नवान्येषामृत्विजां विद्यते कदा ।।१६।।

छन्दोगपरिशिष्टे यत्प्राह कात्यायनो मुनिः ।
मानक्रियायामुक्तायामनुक्ते मानकर्तरि ।
मानकृद्यजमानःस्याद्विदुषामेव निर्णयः ।।१७।।

प्रकल्पयेत् स्रुचं यागे वक्ष्यमाणेन वर्त्मना ।
कारस्करेष्वामलकी पलाशखदिरेष्वपि ।।१८।।

श्रीपर्णी शिंशपा शीरशाखिष्वेकतमं बुधः ।
गृहीत्वा विभजेद्धस्तमात्रं षट्त्रिंशता पुनः ।।१९।।

विंशत्यंशैर्भवेद्दन्तो वेदी तैरष्टभिर्भवेत् ।।२०।।

एकांशेन मितः कण्ठः सप्तभागमितं मुखम् ।
वेदीत्र्यंशेन विस्तारः कण्ठस्य परिकीर्तितः ।।२१।।

अग्रं कण्ठसमानं स्यान्मुखे मार्गं प्रकल्पयेत् ।
कनिष्ठाङ्गुलिमानेन सर्पिषो निर्गमाय वै ।।२२।।

वेदीमध्ये विधातव्या भागेनैकेन कर्णिका ।
विदधीत बहिस्तस्या एकांशेनाभितो वटम् ।।२३।।

तस्य खातं त्रिभिर्भागैर्त्तवृ्मर्धांशतो बहिः ।
अंशेनैकेन परितो दलानि परिकल्पयेत् ।।२४।।

पत्राण्यपि खनेदेतदूचिरे केचिदु(त्व)णाः ।।
तदत्रानुपदेशेन जाव(य)ते न मनोहरम् ।।२५।।

मेखला मुखवेद्योः स्यात् परितोऽर्धांशमानतः ।
दन्तमूलाग्रयोः कुण्डौ(?)गुणवेदाङ्गुले क्रमात् ।।२६।।

दन्तौ युग्मयमांशैः स्यादण्डस्यानाह ईरितः ।
षड्भिरंशैः पुच्छभागो वेद्याः कूर्माकृतिर्भवेत् ।।२७।।

हंसस्य वा हस्तिनो वा पत्रिणो वा मुखं लिखेत् ।
मुखस्य पृष्ठभागेऽस्याः संप्रोक्तं लक्षणं स्रुचः ।।२८।।

---

स्रुचश्चतुर्विंशतिभिर्भागै राचयेत् स्रुवम् ।
द्वाविंशत्यादण्डमानमंशैरेतस्य कीर्तितम् ॥१॥

चर्तुर्भिरंशैरानाहः कर्षाज्यग्र(ा)हितच्छिरः ।
अंशद्वयेन निखनेत् पङ्क्ते मृगपदाकृतिम् ॥२॥

दण्डमूलाग्रयोर्गुण्डी भवेत्कङ्कणभूषिता ।
स्रुवस्य लक्षणं प्रोक्तं सर्वतन्त्रानुसारतः ॥३॥

सुवर्णरूप्यताम्रैर्वा यद्वा लोहेन कल्पयेत् ।
स्रुक्स्रुवौ विधिवद्विद्वानिति फेत्कारिणीमतम् ॥४॥

मूले हानिकरं प्रोक्तं मध्ये शोककरं तथा ।
अग्रे व्याधिकरं प्रोक्तं स्रुवं धारयते कथम् ॥५॥

चतुरलंङ्ग परित्यज्याग्रे चैव द्विरष्टकम् ।
चतुरलंङ्ग तु तन्मध्ये धारयेच्छंखमुद्रया ॥६॥

हीयते यजमानो वै स्रुवमूलस्य दर्शनात् ।
तस्मात्सङ्गोपयेन्मन्त्री होमकाले यथाविधि ॥७॥

उत्तानेनैव हस्तेन अङ्गुष्ठाग्रेण पीडितम् ।
संहताङ्गुलिपाणिस्तु वाग्यतो जुहुयाद्धविः ॥८॥

पलाशपत्रे निश्छिद्रे रुचिरे स्रुक्स्रुवौमुने ।
कुर्यादश्वत्थपत्रे वा संक्षिप्ते होमकर्मणि ॥९॥

ततः प्रयोगान् कुर्वीत सिद्धवत् कथितान् पुरा ।
इदानीमभिधास्येऽत्र सम्यक् षट्कर्मलक्षणम् ॥१०॥

सर्वतन्त्रानुसारेण प्रयोगफलसिद्धिदम् ।
शान्तिवश्यस्तम्भनानि द्वेषणोच्चाटने ततः ।
मारणान्तानि शंसन्ति षट्कर्माणि मनीषिणः ॥११॥

रोगकृत्याग्रहादीनां निराशः शान्तिरीरिता ।
वश्यंजनानां सर्वेषां विधेयत्वमुदीरितम् ।।१२।।

प्रवृत्तिरोधः सर्वेषां स्तम्भनं समुदाहृतम् ।
स्निग्धानां द्वेषजननं मिथो विद्वेषणं मतम् ।।१३।।

उच्चाटनं स्वदेशादेर्भ्रंशनं परिकीर्तितम् ।
प्राणिनां प्राणहरणं मारणं समुदाहृतम् ।।१४।।

स्वदेवतादिक्कालादीन् ज्ञात्वा कर्माणि साधयेत् ।
रतिर्वाणी रमा ज्येष्ठा दुर्गा काली यथा क्रमात् ।
षट्कर्मदेवताः प्रोक्ताः कर्मादौ ताः प्रपूजयेत् ।।१५।।

ईशचन्द्रेन्द्रनिर्ऋतिर्वाय्वग्नीनां दिशोमताः ।
सूर्योदयं समारभ्य घटिकादशशः क्रमात् ।
ऋतवः स्युर्वसन्ताद्या अहोरात्रं दिने दिने ।।१६।।

वसन्तग्रीष्मवर्षाभ्यः शरद्धेमन्तशैशिराः ।
हेमन्तः शान्तिके प्रोक्तो वसन्तो वश्यकर्मणि ।।१७।।

शिशिरे सम्मानं ज्ञेयं विद्वेषे ग्रीष्म ईरितः ।
प्रावृडुच्चाटने ज्ञेया शरन्मारण कर्मणि ।।१८।।

पद्माख्यं स्वस्तिको भूयो विकटं कुक्कुटं तथा ।
वक्रकं भद्रमित्याहु रासनानि मनीषिणः ।।१९।।

जानुजङ्घान्तरालेतु भुजयुग्मं प्रकाशयेत् ।
विकटासनमेतत्स्यादुपविश्योत्कटासने ।।२०।।

कृत्वोत्कटासनं पूर्वं समपादद्वयं ततः ।
अन्तर्जानु करद्वन्द्वं कुक्कुटासनमीरितम् ।।२१।।

गुल्फौच वृषणस्याधः सीरण्या (सीवन्याः) पार्श्वतोन्यसेत् ।
पार्श्वपादौ च पाणिभ्यां बद्धं भद्रासनं भवेत् ।।२२।।

अन्यानि स्वस्तिकादीनि पुरा प्रोक्तानि वै क्रमात् ।
षड्मुद्राः क्रमतो ज्ञेयाः पद्मपाशगदाह्वयाः ।।२३।।

मुसलाशनि खङ्गाख्यास्ताः पुरोक्ता यथाक्रमात् ।
पद्मपाशादिका मुद्राः कथ्यतेऽशनि लक्षणम् ।।२४।।

कनिष्ठाङ्गुष्ठ युङ्मुद्रा त्रिकोणात्वशनिर्भवेत् ।
जलं शान्तिविधौ शस्तं वश्ये वह्निरुदीरितः ।।२५।।

स्तम्भने पृथिवी ज्ञेया विद्वेषे व्योमकीत्तितम् ।
उच्चाटने स्मृतो वायुर्भूयोऽग्निर्मारणे मतः ।।२६।।

तत्तद्भूतोदये सम्यक् तत्तन्मण्डल संयुतम् ।
तत्तत्कर्म विधातव्यं मन्त्रिणा निशितात्मना ।।२७।।

दण्डाकारागतिर्भूमेः पुटयोरुभयोरधः ।
तोयस्य, पावकस्योर्ध्वं गतिस्तिर्यङ्नभस्वतः ।।२८।।

गतिर्व्योम्नो भवेन्मध्ये भूतानामुदयः स्मृतः ।
धरणेरुदयेकुर्यात् स्तम्भनं वश्यमात्मवित् ।।२९।।

शान्तिकं पौष्टिकं कर्म तोयस्य समये वसोः ।
मारणादीनि मरुतो विपक्षोच्चाटनादिकम् ।।३०।।

क्ष्वेडादिनाशनं शस्तंमुदये च विहायसः ।
भूतानामुदयः प्रोक्तस्तेषां वक्ष्यामि मण्डलम् ।।३१।।

वृत्तं दिवस्तत्षड्बिन्दुलाञ्छितं मातरिश्वनः ।
त्रिकोणं स्वस्तिकोपेतं वह्नेरर्धेन्दुसंयुतम् ।।३२।।

अम्भोजमम्भसो भूमेः चतुरस्रं सवज्रकम् ।
तत्तद्भूतसमाभानि मण्डलानि विदुर्बुधाः ।।३३।।

वर्णैस्तैरञ्चितान्याहुः स्वस्वनामावृतान्यपि ।
स्वच्छं वियन्मरुत्कृष्णो रक्तोऽग्निर्विशदं पयः ।।३४।।

पीता भूमिः पञ्चभूतान्येवमुक्तानि रूपतः ।
वर्णाः प्रोक्ताः पुरातेषां कुलाकुलपरीक्षणे ।।३५।।

शीतांशुसलिलक्षोणीव्योमवायुहविर्भुजाम् ।
वर्णाः स्युर्यन्त्रबीजानि षट्कर्मसु यथाक्रमम् ।।३६।।

ग्रथनं च विदर्भश्च सम्पुटो रोधनं तथा ।
योगः पल्लव इत्येते विन्यासाः षट्सु कर्मसु ।।३७।।

मन्त्रार्णान्तरितान् कुर्यान्नामवर्णान् यथाविधि ।
ग्रथनं तद्विजानीयात्प्रशस्तं शान्तिकर्मणि ।।३८।।

मन्त्रार्णद्वन्द्वमध्यस्थं साध्यनामाक्षरं लिखेत् ।
विदर्भ एषु(ष)विज्ञेयो मन्त्रिभिर्वश्यकर्मणि ।।३९।।

आदावन्ते च मन्त्रः स्यान्नाम्नोऽसौ सम्पुटो मतः ।
एष संस्तम्भने शस्त इत्युक्तं मन्त्रवेदिभिः ।।४०।।

नाम्न आद्यन्तमध्येषु मन्त्रः स्याद्रोधनं मतम् ।
विद्वेषणविधानेषु प्रशस्तमिदमोरितम् ।।४१।।

मन्त्रस्यान्ते भवेन्नाम योगः प्रोच्चाटने मतः ।
अन्ते नाम्नो भवेन्मन्त्रः पल्लवो मारणे मतः ।।४२।।

सितरक्तपीतमिश्रकृष्णधूमाः प्रकीर्त्तिताः ।
वर्णतो मन्त्रसम्प्रोक्ता देवताः षट्सु कर्मसु ।।४३।।

पञ्चमी च द्वितीया च तृतीया सप्तमी तथा ।
बुधेज्यरविसंयुक्ता शान्तिकर्मणि पूजिता ।।४४।।

गुरुचन्द्रयुता षष्ठी चतुर्थी च त्रयोदशी ।
सप्तमी पौष्टिके शस्ता अष्टमो नवमो तथा ।।४५।।

दशम्येकादशी चैव भानुशुक्रदिनान्विता ।
आकर्षणेत्वमावास्या नवमी प्रतिपत्तथा ।।४६।।

पौर्णमासी चन्द्रभानुयुता विद्वेष कर्मणि ।
कार्ष्णी चतुर्दशीतद्वदष्टमी मन्दतारका ।।४७।।

उच्चाटने तेऽतिशस्ताः प्रदोषेषु विशेषतः ।
चतुर्दश्यष्टमी कृष्णा अमावास्या तथैव च ।।४८।।

नन्दा चार्कदिनोपेता पञ्चमी सप्तमी तथा ।
पौर्णमासी च विज्ञेया तिथिः स्तम्भनकर्मणि ।।४९।।

शुभग्रहे शुभं कुर्यादशुभान्यशुभोदये ।
रौद्रकर्मणि रिक्तार्के मृत्युयोगे च मारणम् ।।५०।।

मन्त्राणां लिखनद्रव्यं चन्दनं रोचना निशा ।
गृहधूमश्चिताङ्गारो मारणेऽष्टविषाणि च ।।५१।।

श्येनाग्निनोनपिन्तानि धत्तूरकरसन्तथा ।
गृहधूमास्त्रिकटुकं विषाष्टकमुदाहृतम् ।।५२।।

देवताकालमुद्रादीन् ज्ञात्वा सम्यग्विचक्षणः ।
षट्कर्माणि प्रयुञ्जीत यथोक्तफलसिद्धये ।।५३।।

षट्कर्मणां बहिर्भूते कुर्यात्कर्माणि मन्त्रवित् ।
शान्तिकस्य विधानानीत्यूचिरे साम्प्रदायिकाः ।।५४।।

कर्मणा प्रबलेनैव प्रतिबन्धे विरोधिना ।
यदि सिद्धिं न लभते द्विस्त्रिर्वा पुनराचरेत् ।।५५।।

दैवेनोपहतोऽत्यन्तमैहिकानि न कारयेत् ।
नापराधोऽस्त्यत्र किञ्चिदुपहासमवाप्नुयात् ।।५६।।



अथातः संप्रवक्ष्यामि मन्त्रांस्तन्त्रेषु गोपितान् ।
प्रसिद्धानप्रसिद्धांश्च नीलसारस्वतादिकान् ।।१।।

दक्षिणामूर्त्तितन्त्रोक्तानपि फेत्कारिणीगतान् ।
तत्तत्प्रसिद्धविविधप्रबन्धपटलस्थितान् ।।२।।

न ब्रवीमि तथा कांश्चित्साधकालस्यकारणात् ।
आदौ त्रिपुरभैरव्या वाग्भवंबीजमुद्धरेत् ।।३।।

तारेण परमां देवीं सम्पुटीकृत्यमन्त्रवित् ।
सरस्वत्यैनमश्चान्ते रुद्रसंख्याक्षरो मनुः ।।४।।

ऋषिःस्याद्दक्षिणामूर्तिः छन्दोगायत्रमीरितम् ।
पारिजातेश्वरी वाणी देवता समुदीरिता ।।५।।

अत्रिर्वरुणसंरुद्धोदवाग्वादिनि च द्वयम् ।
वागीश्वर्या दशार्णोऽयं मन्त्रो वाग्विभवप्रदः ।
ऋषिः कण्वो विराट् छन्दो देवता वाक् समीरिता ।।६।।

हृदयान्ते भगवति वदशब्दद्वयं तथा ।
वाग्देवि वह्निजायान्तं वाग्भवाद्यं समुद्धरेत् ।
मनुं षोडशवर्णाढ्यं वागैश्वर्यफलप्रदम् ।।७।।

तारो मायाधवोबिन्दुशक्तिस्तारं सरस्वती ।
ङेन्तानत्यन्तिको मन्त्रः प्रोक्त एकादशाक्षरः ।।८।।

वाचस्पतेऽमृते भूयः प्लूवः प्लूरिति कीर्तयेत् ।
वागाद्यो मुनिभिः प्रोक्तो रुद्रसंख्याक्षरो मनुः ।।९।।

तोयस्थं शयनं विष्णोः सकेवलचतुर्मुखम् ।
बिन्दुघींशयुतो वह्निः बिन्दुसद्याम्बुवान् भृगुः ।
उक्तानि त्रीणि बीजानि सद्भिः सारस्वार्थिनाम् ।।१०।।

[वाग्भवं वामनेत्रं च बिन्दुमद्भुवनेश्वरी ।
उक्तानि त्रीणि बीजानि ऋष्याद्येतस्य पूर्ववत् ।।११।।
शक्तिमादौ समुद्धृत्य त्रोङ्कारं च ततोवदेत् ।
दीर्घं तनुच्छदं चान्ते नीलसारस्वतो मनुः] ।।१२।।

तारादिकः फडन्तोऽसावुक्तस्तारामनुः पृथक् ।
तारहीनः फडन्तश्चेदुक्ता चैकजटा पृथक् ।।१३।।

कथ्यते ऋषिरक्षोभ्यो बृहतीच्छन्द ईरितम् ।
देवता देशिकैरत्र कथितैव यथाक्रमात् ।।१४।।

लज्जायुगं वधूबीजं ततो दीर्घं तनुच्छदम् ।
सारस्वतोऽपरो मन्त्रः कथितश्चतुरक्षरः ।।१५।।

तदन्ते यदि फट्कारो मनुःपञ्चाक्षरोऽपरः ।
तारशक्तिवधूबीजान्यन्ते दीर्घं तनुच्छदम् ।।१६।।

अस्त्रमग्निवधूरन्ते मनुः सप्ताक्षरोऽपरः ।
मन्त्रशास्त्रेषु संप्रोक्तस्तथा दीर्घेण वर्मणा ।
पुटितं च वधूबीजमपरोऽसौ गुणाक्षरः ।।१७।।

वकारौ रेफवामाक्षि बिन्दुयुक्तौ त्रितत्त्वफट् ।
तारं पद्मे युगं पश्चान्महापद्मे समीरयेत् ।।१८।।

पद्मावति द्विठान्तैकजटा सप्तार्णवर्णयुक् ।
द्वादशस्वरगो बिन्दुर्बालाबीजमिदं भवेत् ।।१९।।

वान्तं वह्निसमारूढं वामनेत्रेन्दुसंयुतम् ।
बीजमेतच्छ्रियः प्रोक्तं चिन्तारत्नमिवापरम् ।
ऋषिर्भृगुर्निवृच्छन्दो देवता श्रीः समीरिता ।।२०।।

वाग्भवं वनिता विष्णोर्माया मकरकेतनः ।
चतुर्बीजात्मको मन्त्रः चतुर्वर्गफलावहः ।।२१।।

दीर्घामारादिसर्गान्तौ ब्रह्मभानुर्वसुन्धरा ।
वान्तेसिन्यै प्रिया वह्नेर्मनुः प्रोक्तो दशाक्षरः ।
ऋषिर्दक्षो विराट् छन्दो देवता श्रीः समीरिता ।।२२।।

वाग्भवं शम्भुवनिता रमामकरकेतनः ।
तार्तीयञ्च जगत् पाशौ वह्निबीज समुज्ज्वलः।।२३।।

अर्घीशाढ्यो भृगुस्त्यैह्न्मन्त्रोऽयं द्वादशाक्षरः ।
महालक्ष्म्याः समुद्दिष्टस्ताराद्यः सर्वसिद्धिदः ।।२४।।

ऋषिर्ब्रह्मा समुद्दिष्टश्छन्दो गायत्रमीरितम् ।
देवता जगतामादिर्महालक्ष्मीः समीरिता ।।२५।।

शम्भुपत्नी श्रिया रुद्रा कामो भगवती मही ।
ब्रह्मादित्यौ धरा दीर्घा लक्षादिर्भगवान्मरुत् ।।२६।।

प्रसीदयुगलं भूयः श्रीरुद्रा भुवनेश्वरी ।
महालक्ष्मि नमोऽन्तःस्यात् प्रणवादिरयम्मनुः ।
सप्तविंशत्यक्षराद्यः प्रोक्तः सर्वसमृद्धिदः ।।२७।।

चन्द्रेशमादलक्ष्मेश बह्निदीर्घाक्षिमण्डितम् ।
बिन्दुध्रुवेश्वरीयुक्तं श्रीबीजपुटितं भवेत् ।।२८।।

ऋषिर्हरिस्तथाछन्दो गायत्री चास्य सम्मता ।
देवता मोहिनी लक्ष्मीर्महा साम्राज्यदा भवेत् ।।२९।।

नकुलीशोग्निमारूढो वामनेत्रार्ध चन्द्रवान् ।
बीजं तस्याः समाख्यातं सेवितं सिद्धिकांक्षिभिः ।।३०।।

ऋषिः शक्तिर्भवेच्छन्दो गायत्री देवता मनोः ।
कथिता सुरसंघेन सेविता भुवनेश्वरी ।।३१।।

वाग्भवं शम्भुवनिता रमा बीजत्रयात्मकम् ।
मन्त्रं समुद्धरेन्मन्त्री त्रिवर्गफलसाधनम् ।।३२।।

वाग्बीजपुटिता माया विद्येयं त्र्यक्षरी मता ।।३३।।

अनन्तो बिन्दुसंयुक्तो माया ब्रह्माग्नितारवान् ।
पाशादित्र्यक्षरो मन्त्रः सर्ववश्यप्रदायकः ।
ऋष्याद्याः पूर्वमुक्ताःस्युर्देवता भुवनेश्वरी ।।३४।।

तारो माया वर्मबीजमृद्धिरीश्वरसंयुता ।
कूर्मस्तदन्तो भगवान् क्षन्त्री (स्त्री) दीर्घतनुच्छदम् ।।३५।।

संवर्त्तो भगवान् माया फडन्तो द्वादशाक्षरः ।
मुनिरर्जुन आख्यातो विराट् छन्दःसमीरितम् ।
त्वरिता देवता प्रोक्ता पुरुषार्थफलप्रदा ।।३६।।

कवचं भगवांश्चन्तो मेरुः सर्गसमन्वितः ।
त्रिकण्ठ(ण्ट)की समाख्याता विद्या वर्णत्रयात्मिका ॥३७॥

क्षेरुद्धा स्त्री त्रिवर्णेयं विद्या वश्यत्रिकण्टकी ॥३८॥

तारो मायावाग्भवान्ते नित्यक्लिन्ने मदद्रवे ।
.........वह्निजायान्तो मन्त्रः पञ्चदशाक्षरः ॥३९॥

वाग्भवं मान्मथं बीजं नित्यक्लिन्ने "मदौ" पुनः ।
द्रवे वह्निवधूर्मन्त्रो द्वादशार्णोऽयमीरितः ।
ऋषिः संमो(ह)नश्छन्दो निवृन्नित्या च देवता ॥४०॥

वाङमायानन्तरं भूयो नित्यक्लिन्ने मदद्रवे ।
द्विचान्तो रविसंख्यार्णो मन्त्रोवश्यप्रदायकः ॥४१॥

अङ्गिराःस्यादृषिस्त्रिष्टुप् छन्दो मुनिभिरीरितम् ।
वज्रप्रस्तारिणी प्रोक्ता देवताभीष्ट दायिनी ॥४२॥

भुवनेशीं समुच्चार्य नित्यक्लिन्ने मदद्रवे ।
नवाक्षरा च विद्येयं द्विचान्तोरुद्रवर्णभाग् ॥४३॥

श्रीमायामदनैः प्रोक्तो मन्त्रोबीजत्रयात्मकः ।
ऋषिः सम्मोहनश्छन्दो गायत्रं त्रिपुटेश्वरी ॥४४॥

पाशाङ्कुशपुटाशक्तिर्झिण्टीशो गगनं मरुत् ।
परमेश्वरि शब्दान्ते द्विचान्तः प्रणवादिकः ।
अश्वारूढो मनुः प्रोक्तस्त्रयोदशभिरक्षरैः ॥४५॥

माया हृद्भगवत्यन्ते माहेश्वरि पदं भवेत् ।
अन्नपूर्णे ठयुगलं मनुः सप्तदशाक्षरः ॥४६॥

पराश्रीकामयुगलं तदन्ते भगवत्यथ ।
माहेश्वरि ततश्चान्नपूर्णे स्वाहा ध्रुवादिवान् ॥४७॥

द्विदशार्णो मुनिर्ब्रह्मा पंक्तिश्छन्दोऽभिधीयते ।
अन्नपूर्णेश्वरी सिद्धा देवता समुदीरिता ॥४८॥

माया पद्मावतिपदं ततः पावकवल्लभा ।
सप्तार्णो मनुराख्यातः सर्ववश्यप्रदायकः ॥४९॥

दान्तावर्घांशविद्वन्तौ बीजे धूमावति द्विठम् ।
पिप्पलादो मुनिश्छन्दो निवृद्धूमावतीमनुः ॥५०॥

परा ज्वालामुखीत्यन्ते द्विठं सप्ताक्षरो मनुः ।
मायाऽत्रिः कर्णबिन्द्वाढ्यो भूयोऽसौ सर्गवान् भवेत् ॥५१॥

पञ्चान्तकः प्रतिष्ठावान् मारुतो भौतिकासनः ।
तारादि हृदयान्तोऽयं मन्त्रो वस्वक्षरात्मकः ॥५२॥

ऋषिःस्यान्नारदश्छन्दो गायत्री देवता मनोः ।
दुर्गासमीरितासद्भिर्दुरितापन्निवारिणी ॥५३॥

भान्तं वियत्सनयनं श्वेतो मर्द्ध (र्ग) नि ठद्वयम् ।
अष्टाक्षरी समाख्याता विद्या महिषमर्दिनी ॥५४॥

तारे दुर्गे युगं रक्तमन्त्योढान्तं सलोचनम् ।
द्विचान्ता जय दुर्गेयं विद्या वेद्या दशाक्षरी ॥५५॥

वदेन्महिषशब्दान्ते हिंसिके कूर्चमुच्चरेत् ।
अस्त्रं च वह्निजायान्तो मनुरेष दशाक्षरः ॥५६॥

ज्वल ज्वलपदस्यान्ते शूलिनिद्वितयं ततः ।
दुष्टग्रह…मस्त्रान्ते वह्निजायावधिर्मनुः ॥५७॥

अष्टादशाक्षरैः प्रोक्तो ग्रहक्षुद्रारिनाशकः ।
ऋषिर्दीर्घतमाः प्रोक्तः ककुप् छन्द उदाहृतम् ।
शूलिनी देवता प्रोक्ता समस्तसुरवन्दिता ॥५८॥

उत्तिष्ठपदमाभाष्य पुरुषिस्यात्पदं पुनः ।
पितामहः सनेत्रेन्दुः स्वपिषिस्याद्भयं च मे ॥५९॥

समुपस्थितमुच्चार्य यदिशक्यमनन्तरम् ।
अशक्यं वा पुनस्तन्मे वदेद्भगवतिं ततः ॥६०॥

शमयाग्निवधूः सप्तत्रिंशदर्णात्मको मनुः ।
ऋषिरारण्यकश्छन्दोऽप्यत्युनुष्टुबुदाहृतम् ।
देवता वनदुर्गाख्या सर्वदुर्गविनाशिनी ॥६१॥

कामबीजपुटं तारयुगं रामेश्वरीरयेत् ।
कूर्चयुग्मान्तरे शक्तिरस्त्रं वह्निवधूर्भवेत् ॥६२॥

रामेश्वरीयं ताराद्या विद्या पञ्चदशाक्षरी ।
शक्तित्रितत्त्ववाग्बीजं तारमन्त्रान् समुद्धरेत् ॥६३॥

वज्रवैरोचनीत्यन्ते भगवान्मारुतो भवेत् ।
कूर्चमस्त्रं (न्त्रं) द्विचान्तोऽसौ त्रिशक्तिस्तावदक्षरी ॥६४॥

तारं ततो वज्रपदं ततो वैरोचनी भवेत् ।
भगवान्मारुतो मायायुगं चास्त्रं द्विठं भवेत् ।
त्रयोदशाक्षरश्चैष छिन्नमस्तामनुर्भवेत् ॥६५॥

आदिलक्ष्मी शक्तिकूर्चवाग्बीजानि समुद्धरेत् ।
वज्रवैरोचनीये स्यान्मायायुग्मं फडुच्चरेत् ॥६६॥

वह्निजायावधिर्मन्त्रः प्रत्येकं बहुशो भवेत् ।
बीजैः पञ्चभिराद्यन्तमध्येषु मिलितैः पृथक् ॥६७॥

व्यस्तैरनुक्रमोक्तैश्च छिन्नमस्तां प्रकीर्तयेत् ।
ऋषिः सम्राडिह प्रोक्तश्छन्दोऽस्या भैरवं भवेत् ॥६८॥

वियद्भृगुहुताशस्थो भौतिको बिन्दुशेखरः ।
वियत्तदादिकेन्द्राग्निस्थितं वामाक्षि बिन्दुमत् ॥६९॥

आकाशभृगुवह्निस्थो मनुः सर्गेन्दुखण्डवान् ।
वाग्भवं प्रथमं बीजं कामबीजं द्वितीयकम् ॥७०॥

तृतीयं शक्तिबीजाख्यं त्रिभिर्बीजैरुदाहृता ।
पञ्चकूटात्मिका विद्या वेद्या त्रिपुरभैरवी ॥७१॥

ऋषिःस्याद् दक्षिणामूर्तिश्छन्दः पंक्तिः समीरितम् ।
देवता देशिकैरुक्ता देवी त्रिपुरभैरवी ॥७२॥

आद्यन्तौ रेफरहितावन्ते बिन्दुं परित्यजेत् ।
मध्यमे चन्द्रबीजाधः शिवबीजमितिक्वचित् ॥७३॥

कान्तान्तं वान्तसंयुक्तमकुलान्तं च नान्तवत् ।
षट्कूटमेतत्कथितं बिन्दुनादयुतं क्रमात् ॥७४॥

तारं कामो नमोऽन्तश्चेत्तद्देवी हृदयं भवेत् ।
पूर्वोक्तभैरवीमन्त्रे कामकूटे परा शिवाम् ॥७५॥

हित्वोच्चरेत्तदा देवी भैरवी डामरी भवेत् ।
तारक्ष्मा मादनं बीजं शिवमत्र त्रिधा भवेत् ॥७६॥

अर्केण चेन्दुकलया क्रमात्तं मान्ततं कुरु ।
बिन्दुनादात्मकं चाद्ययुग्ममन्त्यं विसर्गवत् ॥७७॥

षट्कूटभैरवी देवो ऋष्यादि त्रिपुरेशिवत् ।
षट्कूटभैरवीवर्णान् संहारक्रमतो लिखेत् ॥७८॥

तथा सामान्यनित्येयं भैरवी भयहृद्भवेत् ।
डामरेश्वरभैरव्याः कामं हित्वा सुरेश्वरि ॥७९॥

बिन्दुनादकलाक्रान्तं शक्तिबीजं समालिखेत् ।
भयविध्वंसिनी नाम भैरवी समुदाहृता ॥८०॥

पञ्चभिस्त्रिपुराबाणैर्विद्या पञ्चाक्षरी भवेत् ।
ऋषिरस्यास्तु मदनो गायत्रं छन्द उच्यते ।
कामेश्वरीव पूजादि देवता चेयमीश्वरी ॥८१॥

अधरो बिन्दुनादाढ्यो ब्रह्मेन्द्रस्थः शशीयुतः ।
द्वितीयं भृगुसर्गाढ्यो मनुस्तार्तीयमीरितम् ॥८२॥

आदिमादिञ्च मध्यं च मध्यं मध्यं तथान्तिमम् ।
अन्त्यमन्त्यं तथादिं च सैव शीघ्रफला भवेत् ॥८३॥

नवार्णा त्रिपुरेशानी प्रणवेन दशाक्षरी ।
ऋषिःस्याद्दक्षिणामूर्तिश्छन्दः पंक्तिरुदीरितम् ।
देवता त्रिपुरेशानी भजतां कामदो मणिः ॥८४॥

शिवचन्द्राग्निदीर्घाक्षी बिन्दुनादात्मकं ततः ।
चन्द्रेशवह्निवामाक्षिबिन्दुनादमयं भवेत् ॥८५॥

शक्ति कलाढ्यमन्त्ये च चतुर्बीजमुदाहृतम् ।
श्रीबीजं कुरुतार्त्तीयं विद्या वेदाक्षरी भवेत् ॥८६॥

शक्तिबीजं वाग्भवे तत् काम बीजन्तु पूर्ववत् ।
अन्त्यं शिवसमायुक्तं त्रिपुरेश्या महेश्वरि ।
इयं तु ललिता देवी सर्वसौभाग्यदा भवेत् ॥८७॥

केवलं कामबीजन्तु कामेशीमनुरुच्यते ।
ऋषिः कालेऽस्य मन्त्रस्य गायत्रं छन्द उच्यते ।
कामेश्वरी समाख्याता देवता जगदीश्वरी ।।८८।।

वदद्वन्द्वं वादिनीति वाङमध्ये परिनिःक्षिपेत् ।
ह्सैकं वाग्भवे देवि नित्यक्लेदिनि चालिखेत् ।।८९।।

महाक्षोभं कुरुद्वन्द्वं शिवचन्द्रकलानलान् ।
वामाक्षिबिन्दुनादान्तान् तारबीजं ततो लिखेत् ।।९०।।

मोक्षं कुरुयुगं ह्सः शक्रस्वरविसर्गवान् ।
इयं सञ्जीवनीदेवी ऋषिरस्याः सितो भवेत् ।
गायत्रं छन्द आख्यातं देवता जीवनी भवेत् ।।९१।।

वाग्भवं त्रिपुरेशान्या हित्वा तत् संलिखेत् पुनः ।
कामशक्तिद्वयान्तश्च विद्येयं त्र्यक्षरी भवेत् ।
त्रिपुरेशीव ऋष्यादि देवी कामेश्वरी मता ।।९२।।

प्रणवान्तेऽङ्कुशयुगं तन्मध्ये च भरें (भवें) लिखेत् ।
चवर्गमन्त्यहीनं तु विलिखेद्वह्निसंस्थितम् ।।९३।।

चतुर्दशस्वरोपेतं बिन्दुनादाङ्कितं पृथक् ।
स्वाहान्तो मनुरेष स्याद् भरेण्डा देवता भवेत् ।।९४।।

परां विलिख्य वह्न्यन्ते वासिन्यै नम इत्यपि ।।९५।।

अष्टार्णेयं महेशानी देवता वह्निवासिनी ।
ऋषिरस्या वसिष्ठः स्याद्गायत्रं छन्द उच्यते ।।९६।।

नित्यक्लिन्नां समालिख्य मुखे तारं समालिखेत् ।
हृल्लेखान्ते कथं (फरैं) माया चन्द्रबीजं विसर्गवत् ।।९७।।

चतुर्दशाक्षरी विद्या ऋषिर्ब्रह्मा निगद्यते ।
छन्दो गायत्रमित्युक्तं देवीवज्रेश्वरी भवेत् ।।९८।।

भुवनेशीं समुच्चार्य शिवदूत्यै नमो वदेत् ।
सप्तार्णा शिवदूतीयं त्रैलोक्यक्षोभणी भवेत् ।
रुद्रो मुनिस्तु गायत्री छन्दोऽस्यां देवतेरिता ।।९९।।

जीववारुणताराढ्यं सर्वान्ते मङ्गलापदम् ।
ङेचान्ते नम आलिख्य नवार्णा सर्वमङ्गला ।
ऋषिश्छन्दो महेशानि गायत्री छन्द उच्यते ।।१००।।

ओङ्कारं बीजमुच्चार्य नमो भगवतीत्यपि ।
ज्वालामालिनि देवेशि सर्वभूतान्तिमं लिखेत् ।
ज्वालामालिन्यसौ प्रोक्ता भजतां कामदो मणिः ।।१०१।।

शिवश्च चन्द्रजान्ताग्निरुद्रस्वरविभूषिताः ।
विजयां जयदां देवीमनेन विधिनोद्धरेत् ।
ककानुग्रहबिन्द्विन्दु भूषितं मनुमालिखेत् ।।१०२।।

ऋषिर्ब्रह्मास्य मन्त्रस्य गायत्री छन्द उच्यते ।
विचित्रा देवता प्रोक्ता भजतां कामदो मणिः ।।१०३।।

वानया पुटितां कुर्यात्तथा वै नित्यभैरवीम् ।
पञ्चबाणाँश्च देवेशि नित्या शक्राक्षरी भवेत् ।
अन्ये च बहवो भेदा नोक्ता विस्तरकारणात् ।।१०४।।

मादनं तदधः शक्तिस्तदन्ते बिन्दुमालिनी ।
ऐन्द्रं च भुवनेशानीबीजं तद् वाग्भवं भवेत् ।।१०५।।

शिवबीजं त्रिधाकृत्वा सृष्टि स्थितिलयक्रमात् ।
द्वयमाद्येन रहितमाद्याधो मदनाक्षरम् ।।१०६।।

परस्थित शिवाधस्तादिन्द्रबीजं नियोजयेत् ।
तथालयशिवाधोऽपि वह्निस्तुर्यस्वरेन्दुमान् ।
एवमेतन्महाबीजं कामबीजं महोदयम् ।।१०७।।

मायाबीजं महेशानि मादनं शक्रसंयुतम् ।
चन्द्रबीजं केवलं तु विनियोज्य वरानने ।।१०८।।

संहारक्रमयोगेन शक्तिबीजंसमुद्धरेत् ।
आद्यबीजे स्वरौ मुक्त्वा शिवशक्ती पुरो वदेत् ।
श्रीविद्येयं क्वचित्प्रोक्ता देवता पुरसुन्दरी ।।१०९।।

प्रथमायास्तु विद्यायाः शक्ति तुर्यञ्च सुन्दरि ।।११०।।

हित्वा मुखे शिवेन्दुभ्यां लोपामुद्रा त्वियं भवेत् ।
तस्या एव तु विद्यायास्तार्तीयं सुरवन्दिते ।।१११।।

स(म)हाद्यं शक्तिबीजं स्याद्विद्यागस्त्येन पूजिता ।
लोपामुद्राप्रभावेण साक्षाद्ब्रह्मस्वरूपिणी ॥११२॥

उद्धरेदथवा देवीं शक्तिमादनमध्यगम् ।
शिवं कुर्याद्वाग्भवे तु शिवाद्यं कामबीजकम् ॥११३॥

चन्द्राद्यं तु तृतीयं स्याद्विद्येयं मानवी भवेत् ।
अन्ये च बहवो भेदा नोक्ता विस्तरकारणात् ।
ऋषिः स्याद्दक्षिणामूर्त्तिश्छन्दः पंक्त्याह्वयं भवेत् ॥११४॥

[जीवः शिवयुगं जीवकान्तकान्ता शिवेन्दु मत् ।
एतदाद्यं च मध्यं च हंसयुक्क्ष्माक्षहेन्दुमत् ॥११५॥

अन्ते तु हलसत्केन्दु क्षहेन्द्वाकाशमण्डितम् ।
दक्षिणामूर्त्ति (तन्त्रे तु) त्रिकूटमिदमुक्तवत्] ॥११६॥

लक्ष्मीमाये पुनस्तारः परा लक्ष्मीः कुमारिका ।
विद्याव्यस्ता ततो बाला श्रीः परा षोडशाक्षरी ॥११७॥

द्वितीयस्यादियुग्मं तु बिपरीतं लिखेत्सुधीः ।
बालां चान्तर्मुखं कृत्वा विलिखेत्तदनन्तरम् ॥११८॥

तारं मायां ततो लक्ष्मीं क्रमात्कूटत्रयं लिखेत् ।
बालया सम्पुटं कुर्याद्रमाख्या परमेश्वरी ॥११९॥

चन्द्रान्तं वारुणान्तं च शक्रादिसहितं पृथक् ।
वामाक्षि बिन्दुनादान्तमादौ व्यत्यासतो लिखेत् ॥१२०॥

अन्तर्मुखा कुमारी च पञ्चभिः पुटितं लिखेत् ।
षट्कूटं षोडशार्णेयं प्रोक्ता तन्त्रान्तरे क्रमात् ॥१२१॥

तारमायादिबीजानि विद्या षट्कूटकं भवेत् ।
ऋष्यादिः पूर्ववद्भेदा नोक्ता विस्तरकारणात् ॥१२२॥

ब्रह्माद्याधारशक्तिश्च कलास्मरपुरन्दराः ।
एतान् संयोज्य परत ईश्वरीं योजयेच्छिवे ॥१२३॥

चन्द्रबीजं तदादिस्थं शिवबीजं नियोजयेत् ।
मादनं शक्रबीजस्थं योजयेद्भुवनेश्वरीम् ॥१२४॥

शिवबीजं मादनस्थं शक्रषष्ठसमन्वितम् ।
रक्तसप्तमशक्रस्थं मायाबीजं समुद्धरेत् ॥१२५॥

तुण्डाक्षरीशिवादिस्थं मरुदिन्द्रसमन्वितम् ।
धराधरसुताबीजमेकत्रापि नियोजयेत् ।।१२६।।

वक्त्राच्चतुर्थबीजाधः क्रोधीशं च नियोजयेत् ।
पिनाकीशं चन्द्रसंस्थमाकाशं रक्तसंस्थितम् ।।१२७।।

चतुर्थस्वरसंयुक्तं नादबिन्दुविभूषितम् ।
सर्वमेकत्र संयोज्य पञ्च पञ्चाक्षरो भवेत् ।
पञ्चकूटात्मिका विद्या पञ्चमी परदेवता ।।१२८।।

वाङ्मायाकमलास्तारनमोन्ते भगवत्यथ ।
श्रीमातङ्गेश्वरि वदेत् सर्वजनमनोहरि ।।१२९।।

सर्वादिसु(मु)खराज्यन्ते सर्वादिसु(मु)खरञ्जिनि ।
सर्वराजवशं पश्चात् करिसर्वपदं ततः ।।१३०।।

स्त्रीपुरुषवशं ब्रह्मानेत्रमग्न्यासनं ततः ।
सर्वदुष्टमृगवशं करि सर्वभूगुस्त्वर ।।१३१।।

शङ्करि स्यात्सर्वलोकममुकं शिव अग्ररिः ।
वशमानय जायाग्नेरष्टाशीत्यक्षरो मनुः ।।१३२।।

नमः पाशाङ्कुशौद्वेधा फट् स्वाहा कालिकालिके ।
दीर्घंतनुच्छदं काली मनुः पञ्चदशाक्षरः ।।१३३।।

प्रसादान्ते वदेत्कालि महाकालिपदं वदेत् ।
कलावक्षियुतौ द्वेधा तदन्ते च फडुच्चरेत् ।।१३४।।

स्वाहा चतुर्दशार्णोऽयं महाकालीमनुर्भवेत् ।
लज्जाबीजं ततः कूर्चं फडन्ता त्र्यक्षरी भवेत् ।।१३५।।

प्रलयाग्नी सरुधिरावूर्ध्वकेशीसमन्वितौ ।
नादबिन्दुसमायुक्तावेवं क्रोधद्वयं पुनः ।।१३६।।

गुणाक्षरमनुरसौ कौमार्याः कामदो मणिः ।
उच्छिष्टपदमाभाष्य वदेच्चाण्डालिनीत्यपि ।।१३७।।

तदन्ते सुमुखीदेवीं महायुक्तापिशाचिनीम् ।
शक्तिबीजं ततष्टान्तो गुणशः सर्गबिन्दुवा(मा)न् ।।१३८।।

अथवोच्छिष्टचान्तानि (ण्डालि) मातङ्गिपदमीरयेत् ।
ततः सर्ववशं चान्ते करिहृद्वह्निवल्लभा ।
एकोनविंशता वर्णैः सर्वाभीष्टकरो भवेत् ।।१३९।।

शक्तिबीजं त्रिगुणितं भृगुः सर्गयुतोभवेत्।
महाश्वेतामनुरसौ सम्प्रोक्तश्चतुरक्षरः ।।१४०।।

पञ्चान्तकं शशियुतं बीजं गणपतेर्विदुः ।
गणकः स्यान्मुनिश्छन्दो निवृद्विघ्नोऽस्य देवता ।।१४१।।

चतुरीयो विलोमेन ध्रुवादिर्बिन्दुसंयुतः ।
वैघ्नो मन्त्रो हृदन्तोच्चार्विधौहोमेहि(द्वि)चा(ठा)न्तिकः।।१४२।।

श्रीशक्तिस्मरभूविघ्नबीजानि प्रथमं वदेत् ।
ङेन्तं गणपतिं पश्चाद्वरान्ते वरदं पदम् ।।१४३।।

उक्त्वा सर्वजनं मेऽन्ते वशमानय ठद्वयम् ।
अष्टाविंशत्यक्षरोऽयं ताराद्यो मनुरीरितः ।।१४४।।

गणकः स्यादृषिश्छन्दो गायत्रो निवृदन्विता ।
इदं गृहाणवदतो वर्मास्त्रानलवल्लभा ।
चतुर्दशाक्षरी प्रोक्ता महाकाली ध्रुवादिका ।।१४५।।

व(क)कारो रक्तवामाक्षिबिन्दुयुक्तस्त्रिधा भवेत् ।
ततःकूर्चयुगं मायायुगं स्याद्दक्षिणे पदम् ।।१४६।।

कालिके शक्तयस्तिस्रः तथा दीर्घतनुच्छदौ ।
शक्तियुगं द्विठं कालीमनुर्द्वाविंशदक्षरः । ।।१४७।।

भैरवो मुनिराख्यातश्छन्दोनुष्टुबिति क्रमात् ।
हान्तान्तपूर्वो मान्तश्च लान्तोनान्तस्तथैव च ।।१४८।।

कैकादशः कादिषष्ठः खान्तो विष्णुपुरः सरः ।
एभिरष्टाक्षरैर्मन्त्रं शोणपद्ममिव स्मरेत् ।।१४९।।

ओङ्कारं पूर्वतः कृत्वा जप्यः स्यान्नारदो मुनिः ।
छन्दोऽनुष्टुब्देवता च महामाया मनोर्भवेत् ।।१५०।।

तारयुग्मं ततः शक्तिर्वैष्णवीमन्त्रमुद्धरेत् ।
त्रितनुं (त्वां) तारयोर्मध्ये वाराहीत्यपरा भवेत् ।।१५१।।

तारो वियदिन्दुरेफमथ(नु)स्वरयुतं भवेत् ।
भुवनेशीति संप्रोक्ता भवान्यास्त्र्यक्षरो मनुः ।।१५२।।

मायावियदिन्दुरेफमनुस्वरयुतं भवेत् ।
स्वरमस्य परित्यज्य सर्गयोगात्परो भवेत् ।।१५३।।

महागणपतिः प्रोक्तो देवता देववन्दिता ।।१५४।।

माया विविपदद्वन्द्वं ततो गणपतिं वदेत् ।
खङ्गीशपावकौ पश्चाद् वरदान्ते वदेत् पुनः ।।१५५।।

सर्वलोकं मे पदान्तं वशमानय ठद्वयम् ।
षड्विंशत्यक्षरोमन्त्रो भजतां सुरपादपः ।।१५६।।

गणकः स्यादृषिश्छन्दो गायत्रं देवता मनोः ।
वि वि विघ्नेश्वरः प्रोक्तो भजतां सर्वकामदः ।।१५७।।

शक्तिरुद्धं निजं बीजं महागणपतिं वदेत् ।
ङेऽन्तमग्निवधूः प्रोक्तो मन्त्रोऽयंद्वादशाक्षरः ।।१५८।।

गणकः स्यादृषिश्छन्दो गायत्री निवृदादिका ।
उदिता देवता तन्त्रे नाम्नाशक्तिगणाधिपः ।।१५९।।

शक्त्या रुद्धं निजं बीजं वशमानय ठद्वयम् ।
ताराद्यो मनुराख्यातो रुद्रसंख्याक्षरान्वितः ।
ऋष्याद्याः पूर्वमुक्ताःस्युरस्य मन्त्रस्य वै क्रमात् ।।१६०।।

संवर्तको नेत्रयुतः पार्श्वौ वह्न्यासने स्थितः ।
प्रसादनाय हृन्मन्त्रः स्वबीजाद्यो दशाक्षरः ।।१६१।।

गणको मुनिरस्य स्याद्विराट् छन्द उदीरितम् ।
क्षिप्रप्रसादनो विघ्नो देवतास्य उदीरिता ।।१६२।।

पञ्चान्तको बिन्दुयुतो वामकर्णविभूषितः ।
तारादिहृदयान्तोऽयं हेरम्बमनुरीरितः ।।१६३।।

तारं खङ्गीश्वरः कूर्मो निःस्वरोलान्त ईरितः ।
भुवे नतिः सप्तवर्णः स्वब्रह्मण्यात्मको मनुः ।।१६४।।

तारं हस्तिपदं पश्चात् पिशाचपदमीरयेत् ।
इन्द्रमक्षियुतं दुर्गामेकाराढ्यां समुद्धरेत् ।१६५।।

उच्छिष्ट गणनाथस्य लिखेत् स्वाहा दशाक्षर: ।
बीजादिकं वदन्त्येके गायत्री निवृता भवेत् ।
छन्दो मुनिश्च संप्रोक्त: सुश्रीवादिरपि क्रमात् ।।१६६।।

शक्तिस्तारं हस्तिमुखं प्रलम्बोदरशब्दवत् ।
ङेन्तमुच्छिष्टशब्दाढ्यं महात्मानं तथा वदेत् ।।१६७।।

अङ्कुशं दीर्घरक्ताढ्यं पार्श्वं बिन्दुयुतं वदेत्
शक्ति ङेन्तमथोच्छिष्ट स्वाहाष्टाविंशदर्णवान् ।।१६८।।

वक्रतुण्डाय कवचं दीर्घमेष षडक्षर: ।
वक्रतुण्डाय मायान्ते नमश्चाष्टाक्षरो भवेत् ।।१६९।।

खड्गो शम्भोर्भृगुर्बिन्दुर्मनुस्वरसमन्वित: ।
सोमाय हृदयान्तोऽयं मन्त्र: प्रोक्त: षडक्षर: ।
ऋषि:प्रोक्तो भृगुश्छन्द: पंक्ति: सोमोऽस्य देवता ।।१७०।।

तारो घृणिर्भृगु: पश्चाद्वामकर्णविभूषित: ।
वह्न्यासनो मरुत् शेष: सनेत्रोऽत्रिस्त्यपश्चिम: ।।१७१।।

अष्टाक्षरो मनु:प्रोक्तो भानोरभिमतप्रद: ।
देवभागो मुनि: प्रोक्तो गायत्री छन्द ईरितम् ।
देवता जगतामादि: सविताभीष्टसिद्धिद: ।।१७२।।

आकाशवह्निदीर्घेन्दु संयुतं भुवनेश्वरी ।
सर्गान्वितो भृगुर्भानोस्त्र्यक्षरोमनुरीरित: ।।१७३।।

आकाशमग्निपवनसद्यान्तार्घीश बिन्दुमत् ।
मार्तण्डभैरवं नाम बीजमेतदुदाहृतम् ।
पुटितं बिम्बबीजेन सर्वकाम फलप्रदम् ।।१७४।।

टान्तं दहननेत्रेन्दुसहितं तदुदाहृतम् ।
वियदर्धेन्दुललितं तदादि: सर्गसंयुत: ।।१७५।।

अजपाख्यो मनु:प्रोक्तो द्व्यक्षर: सुरपादप: ।
ऋषिर्ब्रह्मा स्मृतो देवी गायत्री छन्द ईरितम् ।
देवता जगतामादि: सम्प्रोक्तो गिरिजापति: ।।१७६।।

व्याहृतित्रयमग्ने स्याज्जातवेद इहावह ।
सर्वकर्माणि सम्भाष्य साधयाग्निप्रिया तत: ।।१७७।।

तारा‌द्योऽयं मनुः प्रोक्तः सप्तविंशतिवर्णवान् ।
ऋषिर्भृगुर्भवेच्छन्दो गायत्री देवतानलः ।।१७८।।

उत्तिष्ठ पुरुषं ब्रूयाद्धवि(रि)पिङ्गल तत्परम् ।
लोहिताक्षपदं देहि मे ददापय ठद्वयम् ।।१७९।।

चतुर्विंशत्यक्षरात्मा समृद्धिमनुरीरितः ।
ऋष्यादयः पुरा प्रोक्ता मनोरस्य मनीषिभिः ।।१८०।।

प्रणवो भूर्भुवः स्वश्च स्वाहा सप्ताक्षरो मनुः ।
ऋष्याद्याः प्राग्वदेवास्य देवता पावको महान् ।।१८१।।

अनुग्रहादिर्देवेशि बिन्दुनादकलात्मकः ।
तारः परा हंसपदं सोहं स्वाहाष्टवर्णवान् ।।१८२।।

ऋषिर्नारायणः प्रोक्तो गायत्रं छन्द उच्यते ।
ब्रह्मैव देवता साक्षात्परं ज्योतिः स्वरूपधृक् ।।१८३।।

तारं नमः पदं ब्रूयान्नरौ दीर्घसमन्वितौ ।
पवनो णाय मन्त्रोयं प्रोक्तो वस्वक्षरात्मकः ।।१८४।।

साध्या(ध्यो)नारायणः प्रोक्तो मुनिश्छन्द उदाहृतम् ।
मन्त्रस्य देवी गायत्री देवता विष्णुरव्ययः ।।१८५।।

प्रणवो हृद्भगवते वासुदेवाय कीर्तितः ।
प्रधानं वैष्णवे तन्त्रे मन्त्रोऽयं द्वादशाक्षरः ।।१८६।।

ऋषिः प्रजापतिश्छन्दो गायत्री परिकीर्त्तितम् ।
देवतास्य मनोः प्रोक्तो वासुदेवो मनीषिभिः ।।१८७।।

हृल्लेखा बीजयुगलं रमाबीज युगं तथा ।
लक्ष्म्यन्ते वासुदेवाय हृदन्तः प्रणवादिकः ।।१८८।।

तारो हृद्विष्णवे पश्चात् ङेन्तः सुरपतिर्भवेत् ।
महाबलाय ठद्वन्द्वं मनुरष्टादशाक्षरः ।
ऋषिर्बिन्दुर्विराट् छन्दो देवता दधिवामनः ।।१८९।।

उद्गिरतपदमाभाष्य प्रणवोद्गीथशब्दतः ।
सर्ववागीश्वरेत्यन्ते प्रवदेदीश्वरेत्यथ ।।१९०।।

सर्ववेदमयाचिन्त्य पदान्ते सर्वमुच्चरेत् ।
बोधय द्वितयान्तोऽयं मन्त्रस्तारादिरीरितः ।।१९१।।

ऋषिर्ब्रह्मास्य निर्दिष्टः छन्दाऽनुष्टुबुदाहृतम् ।
देवता स्याद्धयग्रीवो वागैश्वर्यप्रदायकः ।।१९२।।

अनन्तोऽन्यासनः सेन्दुर्बीजं रामाय हृन्मनुः ।
षडक्षरोऽयमादिष्टः भजतां कामदो मणिः ।।१९३।।

ब्रह्मा प्रोक्तो मुनिश्छन्दो गायत्रं देवता मनोः ।
देशिकेन्द्रैः समाख्यातो रामो राक्षसमर्दनः ।।१९४।।

कवचं जानकीत्युक्त्वा वल्लभायाग्निसुन्दरी ।
दशाक्षरो मनुरसौ भजतां कामदो मणिः ।।१९५।।

रामित्येकाक्षरो मन्त्रो रामेति द्व्यक्षरो मनुः ।
तारशक्तिरमाकामवाक्स्वबीजादिकं क्रमात् ।
रामेति त्र्यक्षरो मन्त्रस्तन्त्रविद्भिरुदीरितः ।।१९६।।

रामेति चन्द्रभद्रान्तौ सम्प्रोक्तौ चतुरक्षरौ ।
स्वाहान्तोऽङ्गफडन्तश्च नमोऽन्तश्च षडर्णवान् ।।१९७।।

कामबीज-रमाबीज पुटितोऽथ यथाक्रमात् ।
रामशब्दश्चतुर्थ्यन्तो नमः पञ्चाक्षरो मनुः ।।१९८।।

कामबीज-रमाबीज-शक्तिबीजादिकं क्रमात् ।
षडक्षरो मनुरसौ कथितं तन्त्रवेदिभिः ।।१९९।।

रामचन्द्रपदं ङेन्तं नमोऽन्तः प्रणवादिकः ।
रामभद्रपदेऽप्येवमुदितोऽष्टाक्षरो मनुः ।।२००।।

शक्तिबीजरमाबीजवाग्बीज पुटितं भवेत् ।
रामेति चन्द्रभद्रान्तं सचतुर्थं नवाक्षरम् ।।२०१।।

तारं नमो भगवते रामचन्द्राय कीर्त्तयेत् ।
अथवा रामभद्राय तावुभौ द्वादशाक्षरौ ।
सन्त्यन्ये बहवो मन्त्रा नोक्ता विस्तरकारणात् ।।२०२।।

तारं नमो भगवते वराहपदमीरयेत् ।
रूपाय भूर्भुवः स्वः स्यात्पतये तदनन्तरम् ।।२०३।।

भूपतित्वं मे पदान्ते देह्यन्ते च ददापय ।
वह्निजायावधिर्मन्त्रः स्यात्त्रयस्त्रिंशदक्षरः ।।२०४।।

भार्गवो मुनिराख्यातश्छन्दोऽनुष्टुबुदाहृतम् ।
देवतादिवराहोऽस्य मन्त्रस्य कथितो बुधैः ॥२०५॥

हृदयं भगवत्यै स्याद्धरण्यै तदनन्तरम् ।
धरण्यन्ते धरे द्वन्द्वं द्विठान्तोऽयं ध्रुवादिकः ॥२०६॥

एकोन विंशत्यर्णाढ्यं धराहृदयमीरितम् ।
वराहोऽस्य मुनिः प्रोक्तश्छन्दो निवृदुदाहृतम् ॥२०७॥

देवता सर्वभूतानां प्रकृतिर्धरणीमता ॥२०८॥

उग्रं वीरं वदेत् पूर्वं महाविष्णुमनन्तरम् ।
ज्वलन्तं पदमाभाष्य सर्वतोमुखमीरयेत् ॥२०९॥

नृसिंहं भीषणं भद्रं मृत्युमृत्युं वदेत्ततः ।
नमाम्यहमयं प्रोक्तो मन्त्रराजः सुरद्रुमः ॥२१०॥

ऋषिर्ब्रह्मासमुद्दिष्टश्छन्दोऽनुष्टुबुदाहृतम् ।
देवता नरसिंहोऽस्य सुरासुरनमस्कृतः ॥२११॥

क्षकारो बह्निमारूढो मनुस्वर समन्वितः ।
बिन्दुनादलसन्मूर्धा बीजं नरहरेर्विदुः ॥२१२॥

बीजं नमो भगवते नरसिंहाय तत्परम् ।
स्याज्ज्वालामालिने पश्चाद्दीप्तदंष्ट्रायतत्परम् ॥२१३॥

अग्निनेत्राय सर्वाय रक्षोघ्नाय पदं वदेत् ।
सर्वभूतविनाशान्ते ल(न)कारो बिन्दुमान् मरुत् ॥२१४॥

सर्वज्वरविनाशान्ते लायाणौं (नायाणौं)दह युग्मकम् ।
पचद्वन्द्वं रक्षयुगं हूँफट् स्वाहा ध्रुवादिकः ।
सप्तषष्ट्यक्षरैः प्रोक्तो ज्वालामाली महामनुः ॥२१५॥

पाशः शक्तिर्नरहरिरङ्कुशो वर्मफट् मनुः ।
षडक्षरो नरहरेः कथितः सर्वकामदः ॥२१६॥

ऋषिर्ब्रह्मा समुद्दिष्टः पंक्तिश्छन्द उदाहृतम् ।
देवता नरसिंहोऽस्य मन्त्रस्य समुदीरितः ॥२१७॥

तारो भृगुर्वियद्भूयस्तदाढ्यं वह्निदीर्घयुक् ।
पावकः कवचास्त्रान्तो मन्त्रः सप्ताक्षरः स्मृतः ॥२१८॥

अहिर्बुध्न्यो मुनिः प्रोक्तश्छन्दोऽनुष्टुबुदाहृतम् ।
देवता मुनिभिः प्रोक्तश्चक्ररूपी हरिः स्वयम् ॥२१९॥

कृष्णाय पदमाभाष्य गोविन्दाय ततः परम् ।
गोपीजनपदस्यान्ते वल्लभाय द्विठावधिः ॥२२०॥

कामबीजादिराख्यातो मनुरष्टादशाक्षरः ।
नारदोऽस्य मुनिः प्रोक्तो गायत्रं छन्द ईरितम् ।
देवता कथितः कृष्णः सर्वकामफलप्रदः ॥२२१॥

गोपीजनपदस्यान्ते वल्लभायाग्निसुन्दरी ।
दशाक्षरो नारदोऽस्य ऋषिश्छन्दो विराडपि ।
देवता देशिकैः प्रोक्तः कृष्णः कंसनिषूदनः ॥२२२॥

ब्रह्मा भूम्यासनासीनः शान्तिरिन्दु विभूषितः ।
बीजं मनोभुवः प्रोक्तं जगत्त्रितयमोहनम् ॥२२३॥

ऋषिः सम्मोहनः प्रोक्तो गायत्रं छन्द ईरितम् ।
सर्वसम्मोहनः साक्षाद्देवता मकरध्वजः ॥२२४॥

श्रीमन्मुकुन्दचरणौ सदेति शरणं ततः ।
अहं प्रपद्य इत्युक्तो मौकुन्दोऽष्टादशाक्षरः ।
नारदोऽस्य तु गायत्री मुकुन्दश्चर्षिपूर्वकः ॥२२५॥

अथवैतत्समस्तान्ते मरुन्नमितशब्दतः ।
बाललोलात्मने हूँ फट् नम इत्यपरोमनुः ॥२२६॥

नलकूबरगायत्री बालकृष्ण इतीरितः(ताः) ।
ऋष्याद्याः सिद्धयः सर्वाः स्युर्जपाद्यैरिहामुना ॥२२७॥

अनुरूपपदस्यान्ते रसरूपपदं वदेत् ।
कृष्णरूपनमोद्वन्द्वमन्नाधिपतये नमः ॥२२८॥

अन्नं प्रयच्छ स्वाहेति विंशदर्णोऽन्नदो मनुः ।
नारदोऽनुष्टुबन्नाधिपतयोऽस्यर्षिपूर्वकाः ॥२२९॥

मनुरेष द्वादशार्ण(:)हूँफट्स्वाहान्तिकोऽपरः ।
ऋष्याद्या ब्रह्म-गायत्री-ग्रहघ्नहरयः क्रमात् ॥२३०॥

असावन्यो मनुर्द्वादशान्ते पुरुषोत्तम ।
आयुर्मे देहि सम्भाष्य विष्णवे प्रभविष्णवे ॥२३१॥

नमोन्तो द्व्यधिकत्रिंशदर्णोऽस्यर्षिस्तु नारदः ।
छन्दोऽनुष्टुब्देवतास्य श्रीकृष्णः परिकीर्त्तितः ॥२३२॥

उक्त्वा गोपालकपदं पुनर्वेषधराय च ।
वासुदेवाय वर्मास्त्रशिरांस्यष्टादशाक्षरः ॥२३३॥

मनुर्नारदगायत्री कृष्णर्ष्यादिरुदीरितः ।
काव्यमध्ये लियस्यान्ते फणामध्ये दिवर्णकान् ॥२३४॥[1]

उक्त्वा पुनर्वदेन्नृत्यं करोति तमनन्तरम् ।
नमामि देवकीपुत्रमित्युक्त्वान्नृत्यशब्दतः ॥२३५॥

राजानमच्युतं ब्रूयादिति दन्तलिपिर्मनुः ।
देशिकैरस्य मन्त्रस्य संप्रोक्तो नारदो मुनिः ।
छन्दोऽनुष्टुब्देवता च कृष्णः कालियमर्दनः ॥२३६॥

शक्ति श्रीपूर्वकोऽष्टादशार्णो विंशतिवर्णकः ।
मन्त्रोऽनेन सदृक्षोऽन्यो मनुर्नहि जगत्त्रये ।
ऋषिर्ब्रह्मास्य गायत्री छन्दः कृष्णस्तु देवता ॥२३७॥

वाग्भवं कामबीजं च कृष्णाय भुवनेश्वरी ।
गोविन्दाय रमा गोपीजनवल्लभ ङे शिरः ॥२३८॥

चतुर्दशस्वरोपेतः शुक्लः सर्गी तदूर्ध्वतः ।
द्वाविंशत्यक्षरो मन्त्रो वागीशत्वप्रदायकः ।
अष्टादशार्णवत्सर्वमङ्गर्ष्यादिकमूहयेत् ॥२३९॥

श्रीशक्ति स्मरकृष्णाय..........शिरो मनुः ।
रव्यर्णोब्रह्मगायत्रीकृष्णर्ष्यादिरनुक्रमात् ॥२४०॥

श्रीशक्ति कामपूर्वोङ्गजन्मशक्तिरमान्तिकः ।
दशाक्षरः स एवादौ स्याच्चेच्छक्तिरमान्वितः ।२४१॥

मारशक्तिरमापूर्वशक्ति श्रीमार पूर्वकः ।
श्रीशक्ति मारपूर्वश्च दशार्णामनवस्त्रयः ।
एतेषां मनुवर्णानामङ्गर्ष्यादि दशार्णवत् ॥२४२॥

अष्टादशार्णो मारान्तो मनुः सुतधनप्रदः ।
ऋष्याद्यष्टादशार्णोक्तं मनोरस्य यथाक्रमात् ॥२४३॥

---

१. कालियफणामध्ये ।

तारं हृद्भगवान् ङेन्तो नन्दपुत्रपदंतथा ।
नन्दान्ते वपुषेऽस्त्यग्निमायान्तो दशवर्णकः ॥२४४॥

अष्टाविंशत्यक्षरोऽयं ब्रुवे द्वात्रिंशदक्षरम् ।
नन्दपुत्रपदं ङेन्तं श्यामलाङ्गपदं तथा ॥२४५॥

तथा बालवपुः कृष्णो गोविन्दो दशवर्णकः ।
अनयोर्नारद ऋषिश्छन्दश्चोष्णिगनुष्टुभौ ॥२४६॥

तारं हृद्भगवान् ङेन्तो रुक्मिणीवल्लभस्तथा ।
शिरोऽन्तः षोडशार्णोऽयं रुक्मिणीवल्लभाह्वयः ॥२४७॥

सर्वसम्पत्प्रदो मन्त्रो नारदोऽस्य मुनिः स्मृतः ।
छन्दोऽनुष्टुब्देवता च रुक्मिणीवल्लभो हरिः ॥२४८॥

नी(ली)ला दन्ता(दण्डा)वधौ गोपीजनसंयुक्तदोःपदम् ।
दण्डान्ते बालरूपेति मेघश्यामपदं ततः ॥२४९॥

एकोनविंशदर्णोऽस्य मनुर्नारद ईरितः ।
छन्दोऽनुष्टुब्देवता च नी (ली)लादण्डहरिर्मतः ॥२५०॥

त्रयोदशस्वरयुतः शार्ङ्गी मेदः सकेशवः ।
तथा मांसयुगन्ताय शिरः सप्ताक्षरो मनुः ॥२५१॥

भजतां कामदः प्रोक्तो नारदोऽस्यमुनिः स्मृतः ।
छन्द उष्णिग्देवता च गोवल्लभ उदीरितः ॥२५२॥

सलवो वासुदेवश्च हृन्ङेन्तं भगवत्पदम् ।
श्रीगोविन्दपद द्वन्द्वं द्वादशार्णोऽयमीरितः ॥२५३॥

मनुर्नारदगायत्रीकृष्णर्ष्यादिरूदीरितः ।
ऊर्ध्वदन्तयुतः शार्ङ्गी चक्री दक्षिणकर्णयुक् ॥२५४॥

मां सं नाथाय नत्यन्तो मूलमन्त्रोऽष्टवर्णकः ।
ऋषिर्ब्रह्मास्य गायत्री छन्दः कृष्णस्तु देवता ॥२५५॥

तारश्रीशक्तिमारान्ते श्रीकृष्णाय पदं वदेत् ।
गोविन्दाय च तस्योर्ध्वं श्री गोपीजन इत्यथ ।
वल्लभाय ततः स्त्रीं श्रीं सिद्ध गोपालको मनुः॥२५६॥

चक्री मनुस्वरयुतः सर्ग्येकार्णो मनुर्मतः ।
कृष्णेति द्व्यक्षरः कामपूर्वस्त्र्यर्णः स एव चेत् ॥२५७॥

स एव चतुरर्णः स्यान्ङेऽन्तोऽन्यश्चतुरक्षरः ।
वक्ष्यते पञ्चवर्णः स्यात्कृष्णाय नम इत्यपि ।।२५८।।

कृष्णायेति स्मरद्वन्द्वमध्ये पञ्चाक्षरोऽपरः ।
गोपालायाग्निजायान्तः षडक्षर उदाहृतः ।।२५९।।

कृष्णाय स्मरबीजाद्यो वह्निजायान्तिकोऽपरः ।
षडक्षरो नमोऽन्तोऽन्यः कृष्णगोविन्दकः पुनः ।।२६०।।

स चतुर्थी सप्तवर्णः सप्तार्णोन्यः पुरोदितः ।
श्रीशक्तिमाराः कृष्णाय मारः सप्ताक्षरोऽपरः ।।२६१।।

कृष्णगोविन्दकौ ङेन्तौ स्मराद्यावष्टवर्णकः ।
दधिभक्षणङे वह्निजायमिरपरोष्टकः ।।२६२।।

सुप्रसन्नात्मने प्रोक्तो नम इत्यपरोष्टकः ।
प्राक्प्रोक्तो मूलमन्त्रश्च नवार्णः स्मरसंपुटः ।।२६३।।

कृष्णगोविन्दकौ ङेन्तावेतेषां नारदो मुनिः ।
उक्तं छन्दस्तु गायत्री देवता कृष्ण ईरितः ।।२६४।।

मन्त्रोऽसौ मारयुग्मान्तरस्थ कृष्णपदाद् भवेत् ।
ऋषिच्छन्दोदैवतानि पूर्वोक्तानि प्रयोजयेत् ।
मारयोरस्य मांसाधो रक्तंचेदपरो मनुः ।।२६५।।

सत्यः शौरिश्च वर्गस्य मध्यमश्चतदन्तयुक् ।
चत्वारः शिखिवामाक्षिशशिखण्डविभूषिताः ।।२६६।।

जयकृष्णयुग्मयुग्मान्ते निरन्तरपदं वदेत् ।
क्रीडासक्तप्रशब्दान्ते वदेन्मुचेतसे ।।२६७।।

नित्यप्रियपदं पश्चात् सचतुर्थि प्रकीर्त्तयेत् ।
ङेन्तं कृष्णपदं चेक्षुकार्मुकान्ते दशाक्षरः ।।२६८।।

सलवाः चाचलसुतारमाभिश्च समुद्धरेत् ।
वीतं क्रमोत्क्रमवशाद् द्विपञ्चाशल्लिपिर्मनुः ।।२६९।।

जनानुरागकवितामहालक्ष्मी करोऽघहृत् ।
आनन्दनारदाश्चस्य ऋषिश्छन्दो विराड् भवेत् ।।२७०।।

देवता हरिरेवास्य जगन्मोहनकारणम् ।
हृदयं रपरं साक्षिलान्तो लतान्वितो मरुत् ।।२७१।।

पञ्चाक्षरो मनुः प्रोक्तस्ताराद्योऽयं षडक्षरः ।
वामदेवो ऋषिश्छन्दः पंक्तिरीशोऽस्य देवता ।।२७२।।
षडक्षरः शक्तिरुद्धः कथितोऽष्टाक्षरो मनुः ।
ऋषिश्छन्दः पुरा प्रोक्तो देवता स्यादुमापतिः ।।२७३।।
सान्तः सद्यान्त संयुक्तो बिन्दुभूषितमस्तकः ।
प्रासादाख्यो मनुः प्रोक्तो भजतां सर्वसिद्धिदः ।
वामदेवो मुनिश्छन्दः पंक्तिर्देवः सदाशिवः ।।२७४।।
तारो माया वियद्बिन्दुमनुस्वरसमन्वितः ।
पञ्चाक्षर समायुक्तो वसुवर्णो मनुर्मतः ।।२७५।।
तारस्थिरा सकर्णेन्दुभृगुः सर्गसमन्वितः ।
त्र्यक्षरात्मा निगदितो मन्त्रो मृत्युञ्जयात्मकः ।।२७६।।
ऋषिः कहोलो देव्यादिगायत्री छन्द ईरितम् ।
मृत्युञ्जयो महादेवो देवतास्य समीरितः ।।२७७।।
दक्षिणामूर्तये पूर्वं तुभ्यं पदमनन्तरम् ।
वटमूलपदस्यान्ते पदंपश्चान्निवासिने ।।२७८।।
ध्यानैकनिरताङ्गाय पश्चाद्ब्रूयान्नमः पदम् ।
रुद्राय शम्भवे तारशक्तिरुद्धोऽयमीरितः ।
षट्त्रिंशदक्षरो मन्त्रः सर्वकामफलप्रदः ।।२७९।।
मुनिःशक्रः समुद्दिष्टः छन्दोऽनुष्टुप्समीरितम् ।
दक्षिणामूर्त्तिनामास्य देवता शम्भुरीरितः ।।२८०।।
प्रणवो हृदयं पश्चात् ततो भगवते पदम् ।
ङेयुतं दक्षिणामूर्त्ति मह्यं मेधामुदीरयेत् ।।२८१।।
प्रयच्छ ठद्वयान्तोऽयं द्वाविंशत्यक्षरो मनुः ।
मुनिश्चतुर्मुखश्छन्दो गायत्री देवता मनोः ।
दक्षिणामूर्त्तिराख्यातो वेदव्याख्यानतत्परः ।।२८२।।
लोहितोऽग्न्यासनः सत्यबिन्दुमान् प्रथमं ततः ।
द्वितीयं बह्निबीजस्था दीर्घा शान्तीन्दुभूषिता ।।२८३।।
तृतीयं लाङ्गली सर्गी मन्त्रोबीजत्रयात्मकः ।
नीलकण्ठात्मकः प्रोक्तो विषद्वयहरः परः ।।२८४।।

अग्निसंवर्तकादित्यानिलौ षष्ठबिन्दुमत् ।
चिन्तामणिरिति ख्यातं बीजं सर्वसमृद्धिदम् ।।२८५।।

कश्यपोमुनिराख्यातश्छन्दोऽनुष्टुबुदाहृतम् ।
अर्धनारीश्वरः प्रोक्तो देवता जगतां पतिः ।।२८६।।

क्षकारोमाग्निपवनवामकर्णार्धचन्द्रवान् ।
उक्तं तुम्बरूबीजन्तद्येन सिध्यन्ति साधकाः ।।२८७।।

मायास्फुरद्वयं भूयः प्रस्फुरद्वितयं ततः ।
घोरघोरतरेत्यन्ते तनुरूपपदं ततः ।।२८८।।

चटयुग्मं तदन्ते स्यात्प्रचट द्वितयं ततः ।
कहयुग्मं रमद्वन्द्वं ततो बन्धयुगं पुनः ।।२८९।।

घातय द्वितयं वर्मफडन्तः समुदीरितः ।
एकपञ्चाशदर्णोऽयमघोरास्त्रमहामनुः ।।२९०।।

अघोरोऽस्य मुनिः प्रोक्तश्छन्दोऽनुष्टुबुदाहृतम् ।
अघोररुद्रः संदिष्टो देवतामन्त्रवित्तमैः ।।२९१।।

तारो वान्तो धरासंस्थो वामनेत्रेन्दुभूषितः ।
पार्श्वोरकः कर्णयुतो वर्मास्त्रान्तः षडक्षरः ।।२९२।।

मनुः पाशुपतास्त्राख्यो ग्रहक्षुद्र निवारणः ।
वर्णान्त्यमौवर्णयुतं क्षेत्रपालाय हृन्मनुः ।
ताराद्यो वसुवर्णोऽयं क्षेत्रपालस्य कीर्तितः ।।२९३।।

उद्धरेद्वटुकं ङेन्तमापदुद्धरणं तथा ।
कुरुद्वयं पुनर्ङेन्तं वटुकं तं समुद्धरेत् ।
एकविंशत्यक्षरात्मा शक्तिरुद्धो महामनुः ।।२९४।।

अर्घीशोवह्निशिखरो लान्तस्थो दान्तईरितः ।
फडन्तश्चण्डमन्त्रोऽयं त्रिवर्णान्तः समीरितः ।।२९५।।

अस्य त्रिको मनुः प्रोक्तश्छन्दोऽनुष्टुबुदाहृतम् ।
चण्डेशो देवता प्रोक्तो देशिकैस्तन्त्रकोविदैः ।।२९६।।

पार्श्वमर्घीन्दु अक्कोलि चतुरावृत्तमुच्चरेत् ।
रकारो दीर्घसंयुक्तश्चान्ते स्याद्द्विचतुर्थयोः ।।२९७।।

निकरेयो (निकारयो) श्चादिबीजं लघुचान्ते समुद्धरेत् ।
कुक्कुटेश्वरमन्त्रोऽयमुक्तः पञ्चदशाक्षरः ।।२९८।।

शक्तिस्तारं नमः पश्चात्ततो भगवते पदम् ।
अघोरेभ्योऽथ घोरेभ्यो रुद्रेभ्य इति वोच्चरेत् ।।२९९।।

नमोऽस्तुवह्निजायान्तश्चतुर्विंशतिवर्णवान् ।
महाभैरवमन्त्रोऽयमुड्डीशः सिद्धिसाधनम् ।।३००।।

येऽन्ये दिनास्त्रकृत्यास्त्र यक्षिण्यस्त्र्यम्बकादयः ।
सन्तोऽपि बहवो नोस्तेऽलसैरपरिग्रहात् ।।३०१।।

षोडशैव सरस्वत्याः श्रियः षड्मनवः क्रमात् ।
दशाष्टौ च महेशान्या दौर्गाश्चैव दशापरे ।।३०२।।

भैरवी सुन्दरी रामा नित्याष्टत्रिंशदादरात् ।
त्रयोदश गणेशस्य सोमस्यैकमथक्रमात् ।।३०३।।

चत्वारो भास्करस्याग्नेस्त्रयस्ते वैष्णवास्ततः ।
चत्वारिंशत्तथाऽष्टौ च गोपालमनवः क्रमात् ।।३०४।।

रामस्यापि चतुस्त्रिंशत् परे नारायणादयः ।
चतुर्नवतिरेवात्ते शम्भोः पञ्चदशेरिताः ।।३०५।।

---

प्रपञ्चसार सिद्धान्तं शारदातिलकं तथा ।
सपरिष्कारमालोक्य तथा सारसमुच्चयम् ।।१।।

प्रयत्नेन दीपिकां दृष्ट्वा तथा सलघुदीपिकाम् ।
तथा पूजाप्रदीपं च पुरश्चरण चन्द्रिकाम् ।।२।।

मन्त्रदर्पणसिद्धान्तं मन्त्रदेवप्रकाशिकाम् ।
मन्त्रनेत्रं च मन्त्रा.......श्रीरामार्चनचन्द्रिकाम् ।।३।।

मन्त्रमुक्तावली-रत्ना-वली-ज्ञानार्णवादिकान् ।
तन्त्रं सनत्कुमारस्य नारदीयं चतुःशतीम् ।।४।।

तूर्णयागं सोमशम्भु-मतंचागस्त्यसंहिताम् ।
संहितां वैष्णवीं तद्वत्तत्त्वसागर संहिताम् ।।५।।

संहितां कपिलप्रोक्तां श्रीमन्त्रवरसंहिताम् ।
तन्त्रं श्रीभुवनैश्वर्याः नयसिद्धान्तमादरात् ।।६।।

कल्पं श्रीवनदूर्गायाः तन्त्रं संमोहनाह्वयम् ।
हयग्रीवमतं तद्वत्तथा विज्ञानभारतम् (भैरवम्) ।।७।।

गु....ञ्च तन्त्रराजं च तथा वै पिङ्गलामतम् ।।८।।

वामकेश्वरतन्त्रं च समस्तं वरदीक्षितम् ।
विज्ञानेश्वर सिद्धान्तं सारश्रीसंहितां क्रमात् ।।९।।

विज्ञानललितं पञ्च-रात्रं नारायणीमपि ।
वसिष्ठसंहितां गार्ग्य-संहितां भैरवं तथा ।।१०।।

दिव्य सारस्वतं....चिच्चन्द्रकामिकमादरात् ।
होमवरोत्तरं ग्रन्थं प्रतिष्ठासार संग्रहम् ।।११।।

संहितां वायवी 'यस्तद्वत्' (न्तद्वत्) संहितांब्रह्मणस्तथा ।
कृशानोः संहितां विष्णुब्रह्मरूद्रादियामलम् ।।१२।।

तथैव यामलोद्धारं मत्स्यसूक्तमपि क्रमात् ।
पार्वतीहरसंवादं वाराहीतन्त्रमादरात् ।।१३।।

तथैव कुब्जिकातन्त्रं त्वरिताज्ञानमादरात् ।
तथा फेत्कारिणीतन्त्रं सुभगोदयमादरात् ।।१४।।

तथैव योगिनी तन्त्रं क्रमशस्त्रिपुरार्णवम् ।
ईशानसंहितां तद्वत्सिद्धान्तं विश्वकर्मणः ।।१५।।

तन्त्रं श्रीदक्षिणामूर्त्तेर्वैशम्पायनसंहिताम् ।
पुराणं विविधं तद्वत् स्मृतिशास्त्राणि भारतम् ।।१६।।

ज्योतिःशास्त्राणि चालोक्य सकलाः पद्धतीः क्रमात् ।
सर्वेषां सारमुद्धृत्य देवनाथेन धीमता ।
विधानमिति संप्रोक्तं पुरश्चर्यादिकर्मणः ।।१७।।

तर्ककर्कशमञ्जीरा शब्दार्थस्तनमन्थरा ।
रचनाहारललिता वल्लभा मम कौमुदी ।।१८।।

माता मे कौमुदी किं च पितापि मम कौमुदी ।
यशो मे कौमुदी किं च जीवनं मम कौमुदी ।।१९।।

स्वगौरवेण कर्त्तव्या नोपेक्षात्र मनीषिभिः ।
मनुराह यतो ग्राह्यँ बालादपि सुभाषितम् ।।२०।।

युञ्जानैरपि योगिभिः परतरं नालम्भि यत्संभ्रमा-
दालोकि प्रणतैर्नवा सरसु (मरमुख) ब्रह्मादिभिर्दैवतैः ।
गोपीनां कुचकुम्भनिर्भरपरीरम्भाय सम्भावितं
वेदान्त प्रतिपादिताय महसे तस्मै परस्मैनमः ।।२१।।

मौकुन्दे पादपद्मे सरभसमधरीभूतचेताः पुरस्ता-
दारादालिङ्ग्य पादाम्बुजयुगलरजो गौरवं गौरवेण ।
मातुः पादारविन्दोपरिलुठितशिराः सादरं शूलपाणेः-
श्चूडापीडावलम्बी विधुरिव विदधे कौमुदीं देवनाथः।।२२।।

यस्तर्कतन्त्र-रमणी-कमनीयकान्तो
गोविन्द एव भुवने विदितः सुकीर्त्तिः ।
तस्यात्मजेन रचिता खलु कौमुदीयं
श्री देवनाथ विबुधेन सतां मुदेऽस्तु ।।२३।।

अब्दे लक्ष्मणसेनस्य वियच्छून्याब्धिलक्षिते ।
अकरोत्कौमुदीमेतां देवनाथो जगद्धिताम् ।।२४।।

इति श्रीतर्कपञ्चाननमहामहोपाध्यायश्रीदेवनाथकृता मन्त्रकौमुदी समाप्ता ।।
।। शुभमस्तु ।। श्रीरस्तु ।।

---

अत्र प्रथमाङ्कः पृष्ठार्थे द्वितीयः श्लोकार्थं प्रयुक्तः।

## १. मन्त्रकौमुद्यां पुरुषनामानि।


केशवः १.३
गोविन्दः १.३, १.४, १.५, २.६, २.७ १६०.२३
देवकीनन्दनः १.२
देवनाथः १.७, २.८, १६०.२३
बुधिकरः १.३
भट्टनागः ११४.७६, ११७.२१, १२२.१८८
मुकुन्दः १८६.२२
रविकरः १.३
विद्याधराचार्यः १२६.५१
विद्यानन्दः १२६.५१
सोमशम्भुः ११६.१०२, ११६.१४१, १३४.१६, १३५.२८


## २. मन्त्रकौमुदीप्रोक्तशास्त्राणि।


ज्योतिःशास्त्राणि १८६.१४
पुराणानि १८६.१६
ब्रह्मपुराणम् ३.१०
भारतम् १८६.१६
मीमांसा १.४
वेदान्तः १.४
स्मृतिशास्त्राणि १८६.१६


## ३. मन्त्रकौमुदीप्रोक्तानि तन्त्रग्रन्थनामानि।


अ

अगस्त्यसंहिता ३०.५१, ६०.२६, १२१.१७५, १२६.४४, १८८.५
अग्निसंहिता १८६.१२
अष्टार्णतन्त्रम् ४.१६

आ

आत्रेयतन्त्रम् ४.१६
आरुणतन्त्रम् ४.१६

ई

ईशानसंहिता १८६.१५

क

कपिलसंहिता १८८.६
कापिलतन्त्रम् ४.१८
कुब्जिकातन्त्रम् १८६.१४
क्रमदीपिका ८१.१३, १०२.२००

ग

गार्ग्यतन्त्रम् ४.१७
गार्ग्यसंहिता २०.११६, २३.१५३, ८४.६५, ६७.१३६, १३५.३२, १८८.१०
गौतमतन्त्रम् ४.१७

च

चिच्चन्द्रिका १८८.११

ज

ज्ञानसागरतन्त्रम् ४.१८
ज्ञानार्णवः ८०.८, ११७.१११, १२१.१७६, १३४.१२५, १८८.४

त

तत्त्वसागरसंहिता १०७.४१, १२६.४३, १८८.५

तन्त्रराजः १८८.८

तार्क्ष्यतन्त्रम् ४.१८

त्रिपुरासारसंग्रहः ११४.७६, १२६.५१, १३७.५७

त्रिपुरार्णवतन्त्रम् १८९.१५

तूर्णीयागः १८८.५

त्रैलोक्यमोहनतन्त्रम् ४.१६

त्वरिताज्ञानम् १८९.१४

द

दक्षिणामूर्तितन्त्रम् २०.११६, १२७.७ १३५.१२, १६४.१, १८९.१६

दिव्यसारस्वतम् १४८.३,१४९.२५,१८८.११

दीपिका ८०.८, ८७.२०, ८८.५, १२४.१३, १८८.२

दीपिकार्थः ९७.१३४

न

नयसिद्धान्तः १८८.६

नारदीयचतुःशती १८८.४

नारदीयतन्त्रम् ४.१७, ३५.२०, ४६.४३, ५४.२८

नारायणीसंहिता १२६.४१, १८८.१०

नारसिंहतन्त्रम् ४.१६

नारायणतन्त्रम् ४.१८

प

पञ्चरात्रम् ३.२, ३.८, ३.९, ३.११, ४.१५, १५६.२, १८८.१०

प्रपञ्चसारतन्त्रम् ११०.१३, १८८.१

पार्वतीहरसंवादः १८९.१३

पिङ्गलातन्त्रम् १८९.८

पुरश्चरणचन्द्रिका १८८.२

पूजाप्रदीपः १८८.२

पौष्करतन्त्रम् ४.१७

प्रतिष्ठासारसंग्रहः १४८.६, १८८.११

प्रह्लादतन्त्रम् ४.१७

फ

फेत्कारिणीतन्त्रम् १५९.४,१६४.१,१८९.१४

ब

बौधायनतन्त्रम् ४.१९

ब्रह्मयामलः १८९.१२

ब्रह्मसंहिता १८९.१२

भ

भट्टवार्तिकम् ३.२

भुवनेश्वरीतन्त्रम् १८८.६

भैरवतन्त्रम् ४.१७, १८८.१०

म

मन्त्रदर्पणतन्त्रम् १३.१२

मन्त्रदर्पणसिद्धान्तः १८८.३

मन्त्रदेवप्रकाशिका १८८.३

मन्त्रनेत्रम् १८८.३

मन्त्रमुक्तावली ११७.११२,१४८.७८,१८८.४

मन्त्ररत्नावली १८८.४

मन्त्रवरसंहिता १८८.६

मत्स्यसूक्तम् १८९.१३

माण्डव्यतन्त्रम् ४.१७

य

यामलोद्धारतन्त्रम् १८९.१३

योगिनीतन्त्रम् १८९.१५

र

रत्नावल्यागमः १२६.५१

रामार्चनचन्द्रिका १८८.३

रुद्रयामलः १८९.१२

रेणुकातन्त्रम् ४.१७

ल

लघुदीपिका ११०.१३, १८८.२

व

वनदुर्गाकल्पः १८८.७
वामकेश्वरतन्त्रम् १८८.६
वायवीसंहिता १२५.३३
वायुसंहिता १८६.१२
वाराहीतन्त्रम् ७.३६, १८६.१३
वाराहपञ्चलक्षणम् ३.८
वासिष्ठतन्त्रम् ४.१८
विज्ञानललितम् १८८.१०
विज्ञानेश्वरतन्त्रम् १८८.६
विद्यानन्दकृतागमः १२६.५०
वैशम्पायनसंहिता १८६.१६
विष्णुयामलः १८६.१२
वैष्णवीतन्त्रम् ८१.१६
वैष्णवीसंहिता १८८.५

श

शाण्डिल्यतन्त्रम् ४.१७
शारदातन्त्रम् ६.१६, ७६.१४४, १४५, ८२.४८, ६६.१६०, १०६.१ ११८.१३६, १२१.१७०, १२१.१७३, १४८ १, १५१.२, १५६.१
शारदातिलकम् ६३.१, १४६.२०
शैवागमः ११६.१०२
शौनकतन्त्रम् ४.१८

स

सत्योक्ततन्त्रम् ४.१८
सनत्कुमारतन्त्रम् १८८.४
सप्तरात्रम् ४.१५
सम्मोहनतन्त्रम् १८८.७
संहितासारः १८८.६
सारसंग्रहः १४८.६
सारसमुच्चयः १८८.१
सिद्धान्तसारः ६४.८६
सुभगोदयतन्त्रम् १८६.१४
सोमशम्भुमतम् १८८.५
स्वायम्भुवतन्त्रम् ४.१८

ह

हयशीर्षम् ४.१६
हयग्रीवतन्त्रम् १८८ ७
होमवरोत्तरतन्त्रम् १८८.११


## ४. मन्त्रकौमुद्युक्तविषयाः


अ

अकारकला १६.६६
अर्घस्थापनम् ८८.१
अङ्गन्यासः ८२.४५
अनन्तः ८१.५२
अर्धचन्द्रकुण्डम् १४४.६६
अष्टकोणकुण्डम् १४७.६६
अष्टदलपद्मम् ७८.१७८
अष्टाङ्गप्रणामः १०२.२०२
अस्त्राः ६८.१५०

आ

आत्मयागः ६०.३०
आदिबीजम् ६२.६२
आनन्दकन्दः ७५.१३०, ६२.५७

इ

इन्दुकलाः १६.६२
इभधर्मः ६२.५५

उ

उकारकला १६.६७

ऐ

ऐश्वर्याष्टदलम् ७५.१३०

औ

औरवम् ४.१३

क

कलावती १४.३३
कलशस्थापनम् १८.६१
कातीयकल्पः १२५.३०
केसरिधर्मः ६२.५५
कुम्भकः ७७.१५२
क्षीरसिन्धुः ६२.५४

ग

गन्धाष्टकम् १५.४४

ज

ज्ञाननालम् ७५.१३०

त

तत्त्वन्यासः ८१.१८

द

दिव्यदृष्टिः १६.१०२
देहेशिवस्यावाहनम् ६४.८७

न

नवरत्नकम् १६.६६
नादकला १६.६६
निर्गुणं ध्यानम् ६३.६८

प

पञ्चाङ्गप्रणामः १०२.२०३
पञ्चरत्नानि १६.१००
पद्मकुण्डम् १४६.८१
पापम् ७७.१६४
पाशुपतम् ४.१३
पीठन्यासः ८२.३२
प्रकृतिपत्रम् ६२.५८
प्राणमन्त्रः १७.७८

ब

बाह्यपूजा ६०.३१
बिन्दुकलाः १६.६६

भ

भानुकलाः १६.६२
भूतशुद्धिः १४.१२२, १६.१०८, ७४.११०
७५.१२६, ७५.१३०, ७८.१६७,
१६८, ७६.१८२, ७६.१८४,
१०१.१६०

म

मकारकलाः १६.६८
मातृकाम्भोजम् ६३.७३, ६५.६५
मातृकाविन्यासः ८०.१
मृगमुद्रा १३५.३६

य

यन्त्रम् ६१.४४
योनिकुण्डम् १४४.६२, १५०.३०

र

रत्नद्वीपः ६२.५४
राश्याधिपाः १२०.१६४

ल

लक्ष्मणम् ४.१३

व

वह्निकला : १६.६४
वागीश्वरीपीठम् ११०.२१
वामम् ४.१५
वाहनम् ६६.१५३
विकारकेसरम् ६२.५८
विगर्भप्राणायामः ७७.१५४
वीरसाधना १३०.२१, २२, २३, २४, २६
१३२.४३
वृषधर्म : ६२.५५
वैराग्यकर्णिका ७५.१३०
वैश्वदेव : ८६.६

श

शालग्रामः ६४.८४

ष

षट्कर्म १५६.११
षट्कर्मदेवता : १६०.१५
षट्कर्महवि : १६०.१६
षट्कर्मासनम् १६०.१६
षडस्रकुण्डम् १४५.७१

स

सगर्भप्राणायाम : ७७.१५४
सगुणं ध्यानम् ६२.६७
सप्तास्रकुण्डम् १४७.६६
संविन्नाल : ६२.५७
संहारमुद्रा : १०५.१७
सर्वतत्त्वात्मकपत्रम् ६२.५७
सर्वतोभद्रमण्डलम् १८.६१
स्रुच : १५८.२८, १५६.१, १५६.४
स्रुव : १५६.१, १५६.४
सोमम् ४.१३
स्वरशक्तय : १६.७१

ह

हृदयाम्भोजम् ६३.६६

# मिथिलाविद्यापीठग्रन्थमाला

## १. प्राचीनाचार्यग्रन्थावली

१. तत्त्वचिन्तामणिः—गङ्गेशोपाध्यायविरचितः, आलोक-दर्पण-संवलितः। प्रत्यक्षखण्डे प्रामाण्यवादान्तः प्रथमो भागः। १९५७ मूल्यम्—१२-००

२. काव्यपरीक्षा—श्रीवत्सलाञ्छनभट्टाचार्यविरचिता। १९५६ मूल्यम्—८-००

३. पारिजातहरणम्—महाकाव्यम्, कविकर्णपूरविरचितम्। १९५६ मूल्यम्—८-००

४. काव्यलक्षणरत्नश्रीः—सिंहलाचार्य-रत्नश्रीज्ञानविरचिता दण्डि-काव्यादर्शटीका। १९५७ मूल्यम्—१५-००

५ वैशेषिकदर्शनम्—अविज्ञातकर्तृकप्राचीनव्याख्योपेतम्। १९५७ मूल्यम्—६-५०

६. अभिज्ञानशकुन्तलम्—कालिदासकृतं शङ्कर-नरहरिकृतटीकाद्वयोपेतम्। १९५७ मूल्यम्—१५-००

७. आगमडम्बरम्—नाटकं जयन्तभट्टकृतम्।

८ लीलावती—भास्कराचार्यकृता दामोदरमिश्रकृतवासनोद्भासिता। ज्योतिषग्रन्थः। १९५९ मूल्यम्—१४-००

९. मन्त्रकौमुदी—देवनाथठक्कुरकृता। १९६० मूल्यम्—६-००

१०. कुमारिलकारिकावली।

११ रसतरङ्गिणी।

१२. अलङ्कारमञ्जरी।

१३. पदार्थीयदिव्यचक्षुः।

१४. रत्नकोशमतम्।

१५. लक्षणमालाव्याख्या।

१६. लक्षणावलीव्याख्या।

## २ अर्वाचीनाचार्यप्रबन्धावली

१. रामावतारप्रकीर्णप्रबन्धावली—प्रथमः खण्डः। १९५६ मूल्यम्—११-००

२. त्रितलावच्छेदकतावादः—नव्यन्यायग्रन्थः पण्डितप्रवरश्रीशशिनाथ (झा) शर्मकृतः १९५६ मूल्यम्—४-५०

३ लिङ्गवचनविचारः—व्याकरणग्रन्थः पण्डितदीनबन्धुझाविरचितः। १९५४ मूल्यम्—४-००

४. विमण्डलवक्रविचारः—ज्योतिषग्रन्थः पण्डितश्रीदयानाथझाविरचितः। १९५४ मूल्यम्—२-००

## 3. Studies in English

1. *History of Mithila*—by Dr. Upendra Thakur
Price Rs. 17·50
2. *History of Navya-Nyāya in Mithila*—by Prof. Dinesh Chandra Bhattacharya Price Rs. 13·50
3. *Vācaspati Miśra on Advaita Vedānta*—by Dr. S. S. Hasurkar Price Rs. 15·00

## ४. महायानसंस्कृतग्रन्थावली

| | |
|---|---|
| १. अवदानशतकम् । | मूल्यम्–१२-५०–१०-०० |
| २. ललितविस्तरः । | मूल्यम्–१२-५०–१०-०० |
| ३. दिव्यावदानम् । | मूल्यम्–२०-००–१६-०० |
| ४. मध्यमकशास्त्रम् । | मूल्यम–१२-५०–१०-०० |
| ५. अवदानकल्पलता प्रथमोभागः । | १२-५०–१०-०० |
| ६. अवदानकल्पलता द्वितीयोभागः । | १२-५०–१०-०० |